आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ९७

# श्रीमज्जैमिनिप्रणीते मीमांसादर्शने

तृतीयाध्यायषष्ठपादमारभ्य तदध्यायान्तस्तत्परिशिष्टरूपया श्रीमन्मुरारिमिश्रप्रणीताङ्कत्वनिरुक्त्या सनाथीकृतो द्वितीयभागस्योत्तरार्धरूपस्तृतीयो भागः ।

श्रीकुमारिलभट्टविरचिततन्त्रवार्तिकाख्यव्याख्यासहितशाबरभाष्यसमेतः ।

स चायं भागः पुण्यपत्तनीयमीमांसाविद्याध्यापकपदाधिष्ठितैः 'मीमांसाविद्वान्' पदभाग्भिर्गुरुवर्यैर्वैद्यनाथशास्त्रिचरणान्तेवासिभिस्तीर्थहळ्ळीग्रामाभिजनसुब्बाशास्त्रिभिः संशोधितष्टिप्पण्यादिना समलंकृतश्च ।

स च

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमत्-महादेव चिमणाजी आपटे

इत्यभिधेयमहाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८५३

खिस्ताब्दाः १९३१



मूल्यं सपादरूपकद्वयम् ( २०४ ) ।

पस्त्यग्रन्थानां सूचीपत्रम् ।

| | | मूल्यम् । | |
|---|---|---|---|
| | | रू० | आ० |
| | ... ... ... | ० | ६ |
| | ास्करप्रणीतभाष्याभ्यां सवलितः | १ | ६ |
| | । ... ... .. | ० | ४ |
| | ग्रन्थोऽतीव पुरातनः । .. | ५ | ० |
| | करभाष्याद्युपेता । .. | ० | १४ |
| | ष्याद्युपेता । .. ... | १ | ० |
| | रशांकरभाष्योपेता । .. | १ | ४ |
| | याद्युपेता । .. ... | १ | ० |
| ९ | मुण्डकोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... ... | ० | १० |
| १० | माण्डूक्योपनिषत्-सटीकशांकरभाष्यगौडपादीयकारिकाद्युपेता । | २ | ५ |
| ११ | ऐतरेयोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... | १ | ४ |
| १२ | तैत्तिरीयोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... | १ | १२ |
| १३ | तैत्तिरीयोपनिषद्भाष्यवार्तिकम्—सुरेश्वराचार्यकृतं सटीकम् । | २ | २ |
| १४ | छान्दोग्योपनिषत्—सटीकशांकरभाष्योपेता । .. . | ५ | ० |
| १५ | बृहदारण्यकोपनिषत्—सटीकशांकरभाष्योपेता । ... | ८ | ० |
| १६ | बृहदारण्यकोपनिषद्भाष्यवार्तिकम्—भागत्रयात्मकम् । | १२ | ८ |
| १७ | श्वेताश्वतरोपनिषत्—भाष्यदीपिकाद्युपेता । .. .. | २ | ४ |
| १८ | सौरपुराणम्—श्रीमद्द्वैपायनप्रणीतम् । उपपुराणम् । ... | ३ | ० |
| १९ | रसरत्नसमुच्चयः—श्रीमद्वाग्भटाचार्यविरचितः । वैद्यकग्रन्थः । | ३ | १२ |
| २० | जीवन्मुक्तिविवेकः—विद्यारण्यविरचितः सटीकः । ... | ३ | १२ |
| २१ | ब्रह्मसूत्राणि—सटीकशांकरभाष्योपेतानि भागद्वयात्मकानि । | १२ | ० |
| २२ | श्रीमच्छंकरदिग्विजयः-विद्यारण्यकृतः । टीकाटिप्पणीभ्यां सहितः । | ६ | ० |
| २३ | वैयासिकन्यायमालाविस्तरः-भारतीतीर्थमुनिप्रणीतः । ... | १ | १२ |
| २४ | जैमिनीयन्यायमालाविस्तरः—श्रीमाधवप्रणीत. । ... | ८ | ० |
| २५ | सूतसंहिता—माधवकृतटीकोपेता । भागत्रयात्मिका । .. | ११ | ८ |
| २६ | हस्त्यायुर्वेदः—पालकाप्यमुनिविरचितः । ... ... | ७ | ६ |
| २७ | वृन्दमाधवः—श्रीमद्वृन्दप्रणीतः । सटीकः । वैद्यकग्रन्थः । | ६ | १२ |
| २८ | ब्रह्मपुराणम्—श्रीमद्व्यासविरचितम् । प्रथमं महापुराणम् । | ६ | ४ |
| २९ | उपनिषदां समुच्चयः-श्रीनारायणशंकरानन्दकृतदीपिकासहितः । | ६ | १२ |
| ३० | नृसिंहपूर्वोत्तरतापनीयोपनिषत्—भाष्याद्युपेता । ... | १ | १२ |

| ग्रन्थनाम । | मूल्यम् । | |
|---|---|---|
| | रू० | आ० |
| ३१ बृहदारण्यकोपनिषन्मिताक्षरा—श्रीनित्यानन्दमुनिविरचिता । | २ | १२ |
| ३२ ऐतरेयब्राह्मणम्—सायणभाष्यसमेतम् । भागद्वयात्मकम् ।... | १० | १० |
| ३३ धन्वन्तरीयनिघण्टुः—श्रीधन्वन्तरिविरचितः। वैद्यकग्रन्थः | ६ | ४ |
| ३४ श्रीमद्भगवद्गीता—शांकरभाष्योपेता । ... ... | २ | ० |
| ३४ श्रीमद्भगवद्गीता—सटीकशांकरभाष्योपेता । .. ... | ६ | ४ |
| ३५ संगीतरत्नाकरः-शार्ङ्गदेवकृत. सटीको द्विभागः। गानशास्त्रम्। | १० | ४ |
| ३६ तैत्तिरीयारण्यकम्—सायणभाष्यसमेत भागद्वयात्मकम् । | ९ | १ |
| ३७ तैत्तिरीयब्राह्मणम्—सायणभाष्यसमेत भागत्रयात्मकम् । . | १४ | ८ |
| ३८ ऐतरेयारण्यकम्—सायणभाष्यसहितम् । .. . . | ३ | ० |
| ३९ संस्काररत्नमाला-गोपीनाथभट्टविरचिता । भागद्वयात्मिका। | १२ | ८ |
| ४० संध्याभाष्यसमुच्चयः—खण्डराजश्रीकृष्णपण्डितादिप्रणीतः। | २ | ० |
| ४१ अग्निपुराणम्—महर्षिव्यासप्रणीतम् । महापुराणम् ... | ५ | ४ |
| ४२ तैत्तिरीयसंहिता—सायणभाष्यसमेता । भागनवकात्मिका । | ४८ | १० |
| ४३ वैयाकरणसिद्धान्तकारिकाः—भट्टोजीदीक्षितकृताः सटीकाः। | ० | १२ |
| ४४ श्रीमद्भगवद्गीता—पैशाचभाष्यसमेता । .. . | १ | ८ |
| ४५ श्रीमद्भगवद्गीता—मधुसूदनश्रीधरकृतटीकोपेता। ... | ५ | ४ |
| ४६ याज्ञवल्क्यस्मृतिः-अपरार्ककृतटीकासहिता भागद्वयात्मिका। | १३ | ० |
| ४७ पातञ्जलयोगसूत्राणि—भाष्यवृत्तिभ्यां समेतानि । ... | ३ | ० |
| ४८ स्मृतीनां समुच्चयः—अङ्गिरःप्रभृतिसप्तविंशतिस्मृत्यात्मकः । | ५ | ० |
| ४९ वायुपुराणम्—महर्षिव्यासप्रणीतम् । महापुराणम् । ... | ४ | १२ |
| ५० यतीन्द्रमतदीपिका—श्रीनिवासदासकृता । प्रकाशटीकोपेता । | १ | ४ |
| ५१ सर्वदर्शनसंग्रहः—माधवाचार्यप्रणीतः। .. . . .. | २ | ० |
| ५२ श्रीमद्गणेशगीता—नीलकण्ठकृतटीकोपेता । ... ... | २ | ० |
| ५३ सत्याषाढश्रौतसूत्रम्—सत्याषाढविरचितं भागदशकात्मकम् । | २८ | ५ |
| ५४ मत्स्यपुराणम्—श्रीमद्द्वैपायनमुनिप्रणीतम् । महापुराणम् । | ६ | ० |
| ५५ पुरुषार्थचिन्तामणिः—आठवलेइत्युपाह्वविष्णुभट्टकृतः । | ४ | ० |
| ५६ नित्याषोडशिकार्णवः—भास्कररायोन्नीतटीकासहितः । | ३ | ८ |
| ५७ आचारभूषणम्—हिरण्यकेश्याह्निकसंकोपाह्वत्र्यम्बककृतम् । | ४ | ६ |
| ५८ आचारेन्दुः—मोटेइत्युपाह्वत्र्यम्बकविरचितः । ... | ४ | ० |
| ५९ श्राद्धमञ्जरी—केळकरोपाह्वबापूभट्टविरचिता । ... | २ | ० |
| ६० यतिधर्मसंग्रहः—विश्वेश्वरसरस्वतीकृतः । ... ... | १ | १२ |

| ग्रन्थनाम । | मूल्यम् । रू० | आ० |
|---|---|---|
| ६१ **गौतमप्रणीतधर्मसूत्रम्**—हरदत्तकृतटीकासमेतम् । ... | २ | ८ |
| ६२ **ईशकेनकठप्रश्नमुण्डमाण्डूक्यानन्दवल्लीभृगूपनिषदः**-सटीकाः | २ | ८ |
| ६३ **छान्दोग्योपनिषत्**—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | १२ |
| ६४ **बृहदारण्यकोपनिषत्**—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | ४ |
| ६५ **शाङ्खायनब्राह्मणम्**—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । . . | १ | ४ |
| ६६ **काव्यप्रकाशः**—उद्द्योतयुतप्रदीपसहितः । ... | ६ | ४ |
| ६७ **ब्रह्मसूत्राणि**—दीपिकासमेतानि । .. ... | ४ | ८ |
| ६८ **बृहद्ब्रह्मसंहिता**—नारदपञ्चरात्रान्तर्गता । . ... | १ | १२ |
| ६९ **ज्ञानार्णवतन्त्रम्**—ईश्वरप्रोक्तम् । तन्त्रशास्त्रग्रन्थः । ... | १ | ४ |
| ७० **स्मृत्यर्थसारः**—श्रीधराचार्यविरचितः । . . ... | १ | १० |
| ७१ **बृहद्योगतरङ्गिणी**—त्रिमल्लभट्टविरचिता भागद्वयोपेता । | १० | १२ |
| ७२ **परिभाषेन्दुशेखरः**—वैद्यनाथकृतगदाख्यटीकायुतः । .. | २ | ६ |
| ७३ **गायत्रीपुरश्चरणपद्धतिः**—श्रीमच्छंकराचार्यविरचिता । . | १ | ८ |
| ७४ **द्राह्यायणगृह्यसूत्रवृत्तिः**—रुद्रस्कन्दप्रणीता । .. | १ | ० |
| ७५ **ब्रह्मसूत्रभाष्यार्थरत्नमाला**—सुब्रह्मण्यविरचिता । | ४ | ४ |
| ७६ **ईशकेनकठोपनिषदः**—दिगम्बरानुचरकृतव्याख्यासमेताः । | १ | ० |
| ७७ **वेदान्तसूत्रमुक्तावलिः**—ब्रह्मानन्दसरस्वतीविरचिता । | २ | ६ |
| ७८ **त्रिस्थलीसेतुः**—नारायणभट्टविरचितः । . . | ३ | १२ |
| ७९ **छान्दोग्योपनिषत्**—मिताक्षराव्याख्यासमेता । ... | २ | ० |
| ८० **वाक्यवृत्तिः**—श्रीमच्छंकराचार्यकृता सटीका । | ० | ८ |
| ८१ **आश्वलायनश्रौतसूत्रम्**—नारायणकृतवृत्तिसमेतम् । . | ४ | ११ |
| ८२ **ब्रह्मसूत्रवृत्तिः**—हरिदीक्षितविरचिता । .. . | २ | ७ |
| ८३ **संक्षेपशारीरकम्**—व्याख्यासहितं भागद्वयोपेतम् । .. | ९ | १ |
| ८४ **अद्वैतामोदः**—अभ्यङ्करोपाह्ववासुदेवशास्त्रिप्रणीतः । ... | २ | ० |
| ८५ **ज्योतिर्निबन्धः**—श्रमहाराष्ट्रश्रीशिवराजविरचितः । .. | ३ | १५ |
| ८६ **विधानमाला**—श्रीनृसिंहभट्टविरचिता । ... ... | ४ | ४ |
| ८७ **अग्निहोत्रचन्द्रिका**—किंजवडेकरोपाह्ववामनशास्त्रिकृता । | २ | १४ |
| ८८ **निरुक्तम्**—दुर्गाचार्यकृतवृत्तिसमेतम् । भागद्वयात्मकम् । ... | १६ | ४ |
| ८९ **काव्यप्रकाशः**—सङ्केताख्यटीकासमेतः । . . ... | ३ | ४ |
| ९० **शाङ्खायनारण्यकम्**-ऋग्वेदान्तर्गतबाष्कलशाखीयम् । ... | ० | ४ |

आनन्दाश्रमसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः ९७

# श्रीमज्जैमिनिप्रणीते मीमांसादर्शने

---

तृतीयाध्यायषष्ठपादमारभ्य तदध्यायान्तस्तत्परिशि-
ष्टरूपया श्रीमन्मुरारिमिश्रप्रणीताङ्गत्वनिरुक्त्या
सनाथीकृतो द्वितीयभागस्योत्तरार्ध-
रूपस्तृतीयो भागः ।

श्रीकुमारिलभट्टविरचिततन्त्रवार्तिकाख्यव्याख्यासहितशाबरभाष्यसमेतः ।

स चायं भागः पुण्यपत्तनीयमीमांसाविद्यालयाध्यापकपदाधिष्ठितैः
'मीमांसाविद्वान्' पदभाग्भिर्गुरुवर्यवैद्यनाथशास्त्रिचरणान्ते-
वासिभिस्तीर्थहल्लीग्रामाभिजनसुब्बाशास्त्रिभिः संशोधित-
ष्टिप्पण्यादिना समलङ्कृतश्च ।

स च

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमन्महादेव चिमणाजी आपटे

इत्यभिधेयमहाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८५२

खिस्ताब्दाः १९३१



मूल्यं सपादरूप्यकद्वयम् ( २७४ ) ।

# निवेदनम् ।

अहो नु खलु भो ! सुचिरनिचितगुणयशःपुञ्जधवलितदिगन्तरास्तत्तच्छास्त्राध्ययनाध्यापनपटुतरमतयो जैमिनिमुनिशबरस्वामिकुमारिलभट्टेति त्रिवाणीसंगमसमुद्भूतमीमांसासहस्रपत्रामोदाघ्राणैकरसिकाः पण्डितप्रकाण्डाः, पुण्यकर्माणः सुधर्माण आनन्दाश्रमसंस्कृतग्रन्थावलीग्राहकमहाभागाश्च पश्यन्तु भवन्तः संप्राप्तमिदं द्वितीयं सुदिनम् । यदद्य प्रतिष्ठापक 'कै० महादेव चिमणाजी आपटे' महाभागपरिष्कृतपूर्वसंप्रदायसिद्धग्रन्थमुद्रणनिर्बन्धवशवर्तिन्या मुद्रणद्वारा प्राचीनसंस्कृतशास्त्रीयग्रन्थोद्धारिण्याऽऽनन्दाश्रमसंस्थया पूर्वमीमांसाशास्त्रे तन्त्रवार्तिकसवलितशाबरभाष्यसमेतजैमिनीयसूत्राणां द्वितीयाध्यायगतद्वितीयपादमारभ्य तृतीयाध्यायान्तो द्वितीयो भागः खण्डद्वयात्मकः स्वकीये मुद्रणालये मुद्रयित्वा प्रथमभाग इव सर्वात्मना स्वतन्त्रताभाक् प्रकाश्यत इति ।

तस्यैतस्यापि मुद्रणार्थमेतत्संस्थास्थपुस्तकजिघृक्षुमाननीयपण्डितप्रवरकृतसमुचितग्रन्थमहत्त्वोपयुक्ताद्यवलोकनतत्तादृशमन्मर्तापेत्येतत्त्रितयानुग्रहादियं संस्था स्वाधिकारेणैव प्रावर्तिष्ट । अत एवायमपि भागोऽप्रतिबन्धमानन्दाश्रमसंस्कृतग्रन्थावल्यां प्रवेशं लब्धवान् । यो यो ग्रन्थः स्वल्पो वा महान्वाऽऽनन्दाश्रमसंस्कृतग्रन्थावलीं प्रवेष्टुमीहते स स सर्वात्मनैतत्संस्थासत्तामुररीकृत्यैव प्रविशति । इतरथा मुद्रणयन्त्राधिरोहणमप्यस्य सुदुर्लभं भवति तत्र का वार्ता ग्रन्थावलीप्रवेशस्य । किं च ग्रन्थावल्यन्तरजिगमिषवोऽपि ग्रन्थाः परकीयसत्तां वहन्तो नार्हेयुरेतत्संस्थां प्रवेष्टुम् । तदेवं स्थितमेतत्—यदानन्दाश्रमसंस्कृतग्रन्थावलीप्रविष्टोऽयं नोत्सहते लेशतोऽप्यन्यसत्तां परिग्रहीतुमिति ।

तदेवमानन्दाश्रमसंस्थयोपक्रम्यमाणेतद्ग्रन्थमुद्रणावसरे श्रीयुतमीमांसाविद्यालयकार्यधूर्वहाग्रेसरैर्मीमांसाविद्यालयाध्यापकप्रतिष्ठितमीमांसाविद्वानितिपदालङ्कृततीर्थहळ्ळीसुब्बाशास्त्रिद्वारा कृतसंस्करणस्य टिप्पणीपाठान्तरादिभिः परिष्कृतस्यैतद्भागस्य तथा प्रेक्षावतां महोपकारकस्याप्यद्ययावत्क्वाप्यमुद्रितस्य तृतीयाध्यायार्थभूतशेषत्वनिर्वचनरूपस्य श्रीमुरारिमिश्रविरचिताङ्गत्वनिरुक्त्याख्यस्य च ग्रन्थस्य मुद्रणे उपयोगार्थं प्रदानेनातुलं साहाय्यकमाचरितमिति सानन्दमभिनन्द्यते तथा परोपकारशालित्वम् । मीमांसापण्डितैः सुब्बाशास्त्रिभिः काशीत्युपाह्वव्याकरणरत्नमहादेवशास्त्रिभिश्चोपर्युक्तग्रन्थद्वयस्य संस्करणं तथा सामीचीन्येन संपादितं यथाऽस्माकमिवान्येषामपि विदुषां मनः संतोषमावहेत् ।

तदिदं पुस्तकद्वयमादाय संमुद्र्य श्रीमत्सच्चिदानन्दचरणयोः प्रकाशितोऽयं पूर्वमीमांसादर्शने खण्डद्वयात्मको द्वितीयो भागः । तत्राऽऽदौ प्रतिपृष्ठं जैमिनिमुनिप्रणीतं सूत्र,

तदधोभागे तद्व्याख्यानभूतं शाबरभाष्यं, तदधोभागे च तावतः शाबरभाष्यस्य विवरणभूतं तन्त्रवार्तिकं निवेशितम् । अङ्गत्वनिरुक्तिग्रन्थस्तु तृतीयाध्यायार्थात्यन्तोपकारकत्वेनैतद्भागान्ते तृतीयाध्यायादनन्तरं संगृहीतः । ततः सूत्राणां तन्त्रवार्तिकश्लोकानां चाकारादिवर्णानुक्रमं संगृह्य प्रारम्भे निवेदनादनन्तरं मत्कृतो जैमिनीयसूत्राणां पाठभेदविचारः पृथगेव संनिवेशितोऽस्ति स वाचकैरवश्यं प्रेक्षणीयः ।

एवं पुस्तकमारचय्य यस्य मस्याधीशितुः श्रीमतः सच्चिदानन्दस्य कृपाकटाक्षवशादेतन्मुद्रणं मद्धस्तादनन्तरायं समजनि तत्सत्तावहमिदं द्वितीयभागरूपं पुस्तकं तस्यैव चरणयोः कमलमिव द्वितीयं समर्पयति प्रकाशकः —

| | |
|---|---|
| पुण्यपत्तनं<br>फाल्गुनशुक्लप्रतिपदि<br>सौम्यनामसंवत्सरे शके १८९२ | आपटेकुलोद्भवो गणेशात्मजो<br>**विनायकरायः ।**<br>( आनन्दाश्रमस्थानीजिगट्रस्टी ) । |



# जैमिनीयसूत्राणां पाठभेदविचारः ।

मीमांसान्यायसूत्राणां पाठभेदः प्रदर्श्यते ।
यथामति विचारेण बहुग्रन्थावलोकनः ॥ १ ॥

अस्ति हि तेषु तेषु ऋषिप्रणीतेषु दार्शनिकेषु सूत्रेषु पाठभेदो नाम महान्प्रबन्धो विद्वद्गोष्ठीविषयः । नायमपूर्वतया कैश्चिदधुनातनैरेव विद्वद्भिः परिकल्प्यतेऽपि तु बहोः कालादयमविच्छिन्नपरम्परया संप्रवर्तितोऽस्मत्प्रव्याख्यापकप्रवरैः । इद हि तत्र निदानं समामनन्ति आचार्याः:- भिद्यन्ते हीमानि सारवन्त्यल्पाक्षराणि सूत्राणि, तत्र तत्र-"

'पाठतोऽप्यर्थतो वाऽपि शब्दतश्च क्वचित्क्वचित् ।
प्रतिभा च पुनस्तत्र कालतो विदुषा मता' ॥

तदिदं शब्दानामर्थवैलक्षण्यं ऋषिवर्यैः सूचितमाचार्यवर्गो विशदीकृत्य शिष्यबुद्धौ प्रवेशयन्तीति सुप्रथितमेतदाचार्यकल्पना साम्प्रतिकानामपि विदुषा सम्मतिः ।

तत्र चाखिलदर्शनमूर्धन्यभूतानि भगवतो जैमिनेः किल परःसहस्राणि प्रमेयपराणि वाक्यसूत्राणि, येषु हि परःसहस्रा युक्तयो न्यायापरनामधेया लौकिकवैदिकव्यवहारोपयोगिन्यः प्रपञ्चिताः । यत्सूत्राध्ययनाध्यापने न्यायापरनामधेययुक्तीना विशदीकरणे च ब्रह्मप्रजापतीन्द्राग्निवसिष्ठप्रमुखा महान्तो भगवन्तः, शबरस्वामि-कुमारिलभट्ट-पार्थसारथिमिश्र-खण्डदेवप्रभृतयः संप्रतिपन्नपाण्डित्याः परिनिष्ठितमतयो व्यापृतमनस्का दरीदृश्यन्ते त एव महात्मानो नवनवोन्मेषशालिन्याऽप्रतिमया मनीषया व्याचख्युस्तानीमानि बह्वर्थानि मीमांसान्यायसूत्राणि । सैवार्थप्रदर्शनप्रणालिका सोमनाथरामकृष्ण-वासुदेवाध्वरि-भट्टशंकर-गागाभट्ट-नीलकण्ठप्रभृतिभिरनवरतपरिश्रमेण परिपालिता । एवमेवास्माभिरिदानींतनैरपि यथामत्यस्वादितदर्शनरसास्वादैः सा प्रणालिका परिपालयितव्येत्ययं प्रयत्नः । वेदव्यापारपराण्येव हीमानि सूत्राणि सूक्ष्मेक्षिकया विचारयितव्यानीति साम्प्रतम् । आहुश्चात्र कण्ठतो भट्टपादाः- 'मीमांसा तु लोकादेव प्रत्यक्षानुमानादिभिरविच्छिन्नसंप्रदायपण्डितव्यवहारैः प्रवृत्ता, न हि कश्चिदपि प्रथममेतावन्तं युक्तिकलापमुपसंहर्तुं क्षमः' इति ।

त्रिविधामत्र पाठभेदमर्यादां प्रदर्शयन्ति ग्रन्थकृतः ।

( १ ) प्रथमतो भाष्यकारास्तावच्चेच्छब्दविशिष्टानि सूत्राणि चेदन्तान्येवाभ्युपगच्छन्ति, यथा-

**लोकवदिति चेत् १-२-२०, न पूर्वत्वात् १-२-२१, व्यर्थे स्तुतिरन्याय्येति चेत् १-२-२८, अर्थस्तु विधिशेषत्वाद्यथा लोके १-२-२९, कारणं स्यादिति चेत् १-४-१७, आनर्थक्यादकारणं कर्तुर्हि कारणानि गुणार्थो हि विधीयते**

१-४-१८, एतादृशि चेदन्तानि सूत्राणि आभासमूत्राणीति भाष्यकृतां व्यवहारः। एवं सर्वत्र चेच्छब्दविशिष्टेषु सूत्रेषु।

( २ ) इतरे तु वासुदेवाध्वरिप्रभृतयो यत्र भाष्यकृद्भिः चेदन्तसूत्रविभजनमकारि तत्राविभक्तमेव सूत्रं पठन्ति-व्यर्थे स्तुतिरन्याय्येति चेदर्थस्तु विधिशेषत्वाद्यथा लोके। १-२-२९, कारणं स्यादिति चेदानर्थक्यादकारणं कर्तुर्हि कारणानि गुणार्थो हि विधीयते। १-४-१८, इत्यादि बहुषु स्थलेषु-क्वचिदक्षरतः क्वचिच्छब्दतश्च पाठभेदो दृश्यते, पर विशेषत स नार्थभेदाय प्रभवतीति वक्तुं युक्तम्। पार्थसारथि-खण्डदेव-माधवप्रभृतयस्तु भाष्यकारीयमेव पन्थानमनुसरन्ति। कश्चित्क्वचिदक्षरशब्दभेदं पठन्ति।

अन्यच्च, अर्थसौकर्यार्थमपि पाठभेदशैलीं भाष्यकृतो बभाषिरे यथा—तदर्थशास्त्रात्। वाक्यनियमात्। बुद्धशास्त्रात्। अविद्यमानवचनात्। अचेतनेऽर्थबन्धनात्। अर्थविप्रतिषेधात्। स्वाध्यायवदवचनात्। अविज्ञेयात्। अनित्यसंयोगान्मन्त्रानर्थक्यम्। इति नव सूत्राणि भाष्यकृत्पाठे। पार्थसारथिमाधवप्रभृतयस्तु भाष्यकृतामेव पाठमनुसरन्ति। कौस्तुभवृत्तिकृतौ तु— तदर्थशास्त्राद्वाक्यनियमाद्बुद्धशास्त्रादविद्यमानवचनादचेतनेऽर्थबन्धनादर्थविप्रतिषेधात्स्वाध्यायवदवचनादविज्ञेयादनित्यसंयोगान्मन्त्रानर्थक्यम्। इत्यविभक्तमेव सूत्रं पठत। समर्थयतश्च स्वपाठम्। कौस्तुभे—' मन्त्रानर्थक्यमित्यन्तस्यैकसूत्रत्वेऽपि व्याख्यासौकर्यार्थं खण्डशः प्रत्येकं पञ्चम्यन्तसूत्रावयवोपन्यासः ' इति, वृत्तिकृच्च —' भाष्ये तदर्थशास्त्रात् ' इति।

वस्तुतस्तु—एकसूत्र्ये समास एवाऽऽवश्यकः। पञ्चम्यन्तसूत्रोल्लिखस्य भाष्यकारेण स्वीकृतत्वात्कथं नु नाम खण्डशः सूत्राणि न प्रविभक्तानीति न विद्मः। भाष्यन्यैरपि—ऐकसूत्र्यवादिभि समासघटित सूत्रपाठोऽङ्गीकृतस्तत्सिद्धिवत् १--४—२३। अतोऽत्र न कश्चिदपि भाष्यकृदितरयोः सूत्रपाठे विशेष इति प्रतीमः।

अन्यच्च—यत्र तु अर्थतः पाठभेदो भाष्यकृतामभिप्रेतस्तत्र त एव विशेषं कण्ठरवेण प्रदर्शयन्ति, यथा— एकादशाध्याये प्रथमचरणे पञ्चदशसूत्रभाष्ये—' एकशब्दादिति चेत ' इत्यत्र ये तु ' एककर्म्यात् ' इति सूत्रं पठन्ति तेषामयमर्थ इति चेत्पश्यामि इत्यादि। भूयान्ह्यत्रार्थतः पाठभेदीयविषयः, अधिकरणात्मकोऽपि च वार्तिककारैर्विवृतोऽस्ति। स तत एवानुसन्धेयो भविष्यति। एवं चात्र भाष्यकृतः सरणिर्यथा सूत्राधिकरणार्थो विद्वद्बुद्धौ सौलभ्येन प्रविष्टो भवेत्तथा तद्ग्रन्थप्रणयनशैल्यालक्ष्यते। न तत्र सूत्रविभागरूपगौरवचिन्तां चिन्तयन्तीति। भूयःसु सूत्रेषु चाल्पीयानेव भेद

एतद्वृत्तौ दृश्यते । यथा–' दर्शनाद्विनियोगः स्यात् ' इति भाष्ये । ' दर्शनाद्विनियोगस्य' इति वृत्तौ । प्राय इमे वृत्तिकारा. खण्डदेवकृतभाट्टकौस्तुभगृहीतपाठैर्विसंवदन्ते यथा खण्डदेवः—' तदशक्तिश्च तदनुरूपत्वात् ' १-३-२७ कौस्तुभे । वृत्तिकृत्—तदशक्तिश्चानुरूपत्वात् १—३—२५ ।

( ३ ) भगवन्तो भट्टपादा वार्तिककाराः स्वग्रन्थे जैमिनीयसूत्राणां तत्र तत्र अर्थत एव पाठभेदमूरीकुर्वन्ति न प्रायः शब्दतोऽक्षरतश्च, नापि केवलं पाठभेदं लिपिमात्रतः प्रदर्श्य विरमन्ति, अपि तु तत्र तत्र स्वाभिप्रायम् , औदासीन्यं, अर्थविशेषं वाऽऽविष्कुर्वन्ति । यथा–द्वितीयाध्याये चतुर्थपादे तन्त्रवार्तिके 'अद्विर्वचनं वा श्रुतिसंयोगाविशेषात् १-४-११ इत्यत्र “ अत्रान्तरे भाष्यकारस्य सूत्रं प्रभ्रष्टम् ' वाक्यासमवायात् ' इति । तदेवं व्याख्येयम्–नैकस्मिन्पुरुषे शाखान्तरवाक्यं समवैति ' इति । इदं च सूत्रं वार्तिके, कौस्तुभे, वृत्तौ च दृश्यमानमपि पार्थसारथिमिश्रमाधवप्रभृतिभिस्तु न संगृहीतम् । तथाऽन्यत्रापि वार्तिके तृतीये चतुर्थाङ्घ्रौ —' विधिना चैकवाक्यत्वात् '—३-४-९ इत्येतत्सूत्रस्याग्रे ' इतः परं षट्[१] सूत्राणि भाष्यकारेण न लिखितानि । तत्र व्याख्यातारो विवदन्ते– केचिदाहुर्विस्मृतानि । लिखितो ग्रन्थः प्रलीन इत्यपरे । फल्गुत्वादुपेक्षितानीत्यन्ये । अनार्षेयत्वादित्यपरे । तथा च ' दिग्विभागश्च तद्वदिति ' निवीताधिकरणातिदेशस्तदानन्तर्यादुपपद्यत इति । वृत्त्यन्तरकारैस्तु सर्वे व्याख्यातानि ' इति वार्तिकमारचय्य भट्टपादा अन्यदप्याहु —' सन्ति च जैमिनेरेवंप्रकाराण्यप्यनन्त्यन्तसारभूतानि सूत्राणि । व्यवहितातिदेशाश्च ' पानव्यापच्च तद्वत् ' इत्यादिषु आश्रिताः । तस्मात्सूत्रमात्रं व्याख्येयम् । इत्युक्त्वाऽपि भूयांसि हि सूत्राणि टुप्टीकासमये परित्यक्तानीति ज्ञायते । यथा च भगवतः पाणिनेर्महाभाष्यकारैः स्पष्टार्थत्वाद्यथास्थानं कानिचित्सूत्राणि न व्याख्यातानि तथाऽत्रापि ह्यनन्त्यन्तसारवन्ति सन्तीत्युक्तत्वात्तान्येव परित्यक्तानीति प्रतिभाति, अत्यन्तसारवन्ति हि संगृहीतानि । वार्तिककाराणां समयेऽधिकरणस्थितिरप्येतादृशीति सत्यं यतस्त औपरिष्टिकसूत्रविवेकविप्रतिपत्तौ तत्र कैश्चित्त्रीण्यधिकरणानि कल्पितानि अपरैश्चत्वारीति ।

तदेतत्सर्वावलोकनेन निश्चितं भवति–नेमानि जैमिनीयसूत्राणि पाणिनीयवच्छब्दप्रधानानि नापि ब्रह्मसूत्रवदक्षरप्रधानानि, अपि तु प्रमेयप्रधानानीति कृत्वैव सर्वे व्याख्यातार इमानि सूत्राणि व्याख्यास्यन्ति । आहुश्चात्र खण्डदेवपादाः–नवमे चतुर्थाङ्घ्रावेक-

---

१ ' उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात् ' ' न वा प्रकरणात्तस्य दर्शनम् ' ' विधिर्वा स्यादपूर्वत्वात् ' ' उदकत्वं चापूर्वत्वात् ' ' सतो वा लिङ्गदर्शनम् ' ' विधिस्तु धारणेऽपूर्वत्वात् ' इति षट् सूत्राणि ज्ञेयानि ।

विंशतितमे सूत्रे—' अत्र च सूत्रव्याख्यानुरोधेन किंचिद्वैलक्षण्येन भाष्यकारेणैकाधिकरण्यं, वार्तिककारेण चाधिकरणद्वयमाश्रितम् । तत् प्रमेयमात्रलेखनप्रवृत्तेन मयोपेक्षितम् ' इति ।

अन्यत्रैषु सूत्रेषु, पाणिनीयसूत्रेषु यथा भगवता पतञ्जलिना संहितापक्ष आश्रित- स्तथा वर्तेत इत्यप्यनुमिमीमहे । तत्र मानमप्यस्ति तच्च खण्डदेवस्तु स्वकृतकौस्तुभग्रन्थे द्वितीयाध्याये चतुर्थचरणे विंशतितमे ' समाप्तिवच्च संप्रेक्षा ' २–४–२० इति सूत्रे—' सूत्र तु–समाप्तिमती, अकारप्रश्लेषेण, असमाप्तिमती वा या, अपेक्षा- बुद्धिरूपा संप्रेक्षा सा, अभेदसाधिकैवेति व्याख्येयम् ' इति व्याचख्यौ । तेन ज्ञायते संहितापक्षेऽप्येषां सूत्राणां पाठ आसीदिति । प्रायस्तावल्लोके येषां शब्दानामर्थाः प्रसिद्धास्त एव भाष्यकारप्रभृतिभिः मीमांसासूत्रव्याख्यातृभिः स्वीकृताः । अतो लौकिके पदार्थे, एतेषां सर्वेषामाग्रहः । अत एव च सूत्राक्षरार्थो न प्रतिपाद्यते प्रायः । अतो हि अवोचत् खण्डदेवः—' प्रमेयमात्रलेखनप्रवृत्तेन मयेति ' । भाष्यकारा अपि शास्त्रारम्भ एवाबीभणन्–" लोके येष्वर्थेषु प्रसिद्धानि पदानि तानि सति संभवे तदर्था- न्येव सूत्रेष्वित्यवगन्तव्यम् । नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वा इतरथा वेदवाक्यानि व्याख्येयानि स्वपदार्थाश्च व्याख्येया इति प्रयत्नगौरवं प्रसज्येत " इति । वार्तिककारा अपि —' वाच्यवाचकसंबन्धो नाऽऽचार्यैरुपदिश्यते, अन्यथानुपपत्त्या हि व्यवहारात्स गम्यते ' इत्याहुः । अपि च ' दोषात्त्विष्टिर्लौकिके ' इत्यत्र तृतीयाध्याये चतुर्थचरणे भूयान् हि लौकिकोऽपि विषयो वार्तिके प्रदर्शितः किं पुनः सूत्रकारा अपि–' मुख्यं वा पूर्वचोदनाल्लोकवत् ' १२ । २ । २३ इति लोकं संगृह्णन्ति । अत एतत्सिद्धं भवति–पूर्वमीमांसासूत्रेषु न कैरपि व्याकरणसूत्रवल्लाघवगौरवचिन्ता प्रस्तूयते । अपि तु प्रमेयचिन्तैव ' वेदार्थ- ज्ञानरत्ने मे तृष्णाऽतीव विजृम्भते ' इति वार्तिककारैरुक्तत्वात् । तस्मादिमानि भगवतो जैमिनेः सूत्राणि प्रमेयपराणीति सिद्धम् ।

यत्र हि प्रतिभयाऽपि भवति पाठभेदस्तदपि निदर्शयामः—उत्पत्तौ वाऽवचनाः स्युरर्थस्यातन्निमित्तत्वात् १–१–२४ इत्यत्र—उत्पत्तौ वा रचनाः स्युरर्थस्या- तन्निमित्तत्वात् १–१–२४ इति सुबोधिन्यां तत्र भगवता रामेश्वरसूरिणा सूत्रं पठ्यते—एवं च वृत्तिः—उत्पत्तौ पदार्थज्ञानोत्पत्तौ सत्यां वाक्यवाक्यार्थयोः संबन्धा रचनाः पुरुषकल्पिताः स्युः । भाष्ये तु—' वा, अवचनाः—अप्रमाणं स्युः ' इति ॥ १ । १ । २४ ।

प्रख्याभावाच्च योगस्य १ । १ । २२ इति भाष्यपाठः ।
प्रख्याभावाच्च योग्यस्य ,, ,, ,, इति सुबोधिनी ।

प्रेक्षाभावाच्च संयोगस्य ,, ,, ,, इति कुतूहलवृत्तिः।

अत्र श्रीसंज्ञके पुस्तके—अस्तीदं प्रातिभज्ञानमधिकम्। तदेवम्—प्रख्याभावाच्च योग॰स्येतीदं सूत्र नन्वित्यारभ्य नैतदेवमिति पूर्वपक्षप्रतिपादकपदेभ्य उत्तरत्र बोद्धव्यमिति भावः। वायुसंबन्धस्य प्रख्यानाभावान्न वायुकारणकः शब्दस्तस्मान्नित्य इति सूत्रार्थो ध्येयः।

तृतीयेऽध्याये पञ्चमे पादे—' चमसेषु समाख्यानात्संयोगस्य तन्निमित्तत्वात् ' ३–५–२२ ' उद्गातृचमसमेकः श्रुतिसंयोगात् ' ३–२–२३ इत्यनयोः सूत्रयोर्मध्ये—' तस्माच्चाब्राह्मणस्य सोमं प्रतिषेधात् ' इति सूत्रं पठन्ति। तत्र वासुदेवाध्वरि—' केचित्तु नेद सूत्रं किं तु संग्रहकं भाष्यमेवेति मन्यन्त इत्याह। रामेश्वरसूरिस्तु—इदं सूत्रमिति मन्यमानः सूत्रमेवाव्रीवृतत्. ' प्रकृतौ वाऽद्विरुक्तत्वात् ' । ३–६–२ इति सूत्रेऽकारश्लेष बभाषे भाष्यकारः। वासुदेवाध्वरी तु विनाऽकारमवीवृतदेतत्सूत्रम्। तथा वार्तिककाराः ' तद्वर्जं तु वचनप्राप्ते ' ३–६–३ इति सूत्रे ' तद्वर्जं तु वचनप्राप्तेः ' इति वा पाठ इत्याहुः। एवं त एव ' तत्रार्थात्प्रतिवचनम् ' ३–६–४२ इति सूत्रे ' वदनमिति वा पाठः ' इत्यपि।

तदत्रास्माभिः सहायत्वेन संगृहीतानि भाष्यपुस्तकानि—

१ प्राच्यविद्यासंशोधनमन्दिरात्तावत्त्रीणि पुस्तकानि। तत्रैकं लिखितं समग्रं ससूत्रपाठं च। तदेतदतीव शुद्धमित्यपि निवेदयितुमुत्सुकाः स्मः। अवशिष्टे द्वे पुस्तके अपूर्णे।

२ अन्यच्च लिखितमेकमपूर्णमेव मुम्बापुरीस्थ ' एल्फिन्स्टन् कॉलेज् ' इत्याख्यकलाशालीयपुस्तकालयात्, संस्कृतमहाविद्याध्यक्षगजेन्द्रगडकराख्यैरश्वत्थामाचार्यैर्महता कृपाकटाक्षेण दत्तम्।

३ भाट्टकौस्तुभपुस्तकं त्वेकं कर्नाटकाक्षरैर्लिखितं श्रीगुरुवर्यमीमांसाकण्ठीरव वैद्यनाथशास्त्रिचरणानाम्।

अन्यच्चैकं भाट्टकौस्तुभाख्यं अध्यायत्रयपर्यन्तं श्रीस्मृतितत्त्वविद्प्रवरधर्मशास्त्रप्रवीणधातारकुलमण्डनदातारराख्यगङ्गाधरशास्त्रिपुस्तकालयात्संपादितम्।

मुद्रितानि तु—

४ ' कलकत्ता एशियाटिक्सोसायटी ' इत्यनया संस्थया मुद्रितं भाष्यं सूत्रपाठसहितम्।

५ आनन्दाश्रमे मुद्रितं जैमिनीयाधिकरणरत्नमालासंज्ञकम्।

६ कुतूहलवृत्तिर्नाम वाणीविलासमुद्रणालये मुद्रितमपूर्णम्।

७ जैमिनीयसूत्रवृत्त्याख्यम्--काश्यां मुद्रितम् ।

८ तन्त्रवार्तिकं टुप्टीका च काश्यां मुद्रितम् ।

९ शास्त्रदीपिका निर्णयसागरीया ।

१० तत्रत्यैव भाट्टदीपिका च ।

११ भाट्टकौस्तुभ. काञ्च्यां काश्यां च मुद्रितः ।

१२ जैमिनीयसूत्रमात्रयुतमेकम् ।

तदेतेषु पाठभेदप्रदर्शनाय लिखितान्येवाङ्गीकृतानि न मुद्रितानि । तत्र तु कानिचनाक्षराणि, केचन शब्दा अपि दोषस्खलनादिप्रधानमनुष्यस्वाभाव्याद्धेतुदोषसंभावनायाःसंभावितत्वात् कुतूहलवृत्तौ तु बहवः पाठभेदाः प्रदर्शिता इति ।

तदेतद्यद्यपि लिखितेष्वपि समानं तथाऽपि मुद्रितपुस्तकान्न्यूनदोषो ह्येतेष्वधिगत इति लिखितम् ।

तत्रेमाः संज्ञाः---

श्रीः---प्राच्यविद्यासंशोधनमन्दिरस्थमुत्तम पूर्णम् ।

ग---कुतूहलवृत्तिर्वाणीविलासीया ।

णे---' कलिकातानगरीय एशियाटिक् सोसायटी ' इत्याख्यसंस्थास्थम् ।

शा---मुम्बापुरीस्थम् । एल्फिन्स्टनकॉलेज इत्याख्यशालीयम् ।

प---कौस्तुभाख्यं दातारीयम् ।

न---वार्तिकटुप्टीकापुस्तकम् ।

मः---इतरत् ।

एतेषु श्रीसंज्ञकपुस्तकस्य एव पाठ इतरपाठैर्विचार्यैव मुख्यः स्वीकृतोऽस्ति अन्यस्य तु अधः प्रदर्शनमात्रं क्वचित् क्रियते । तदेतद्विचारित विचारसिकाः परिनिष्ठितमतयश्चाऽऽकलयन्त्विति सर्वमनवद्यम् । एवं सानन्दमावेदयति विदुषः प्रति प्रकाशकः---

आपटेकुलोद्भवो गणेशात्मजो विनायकरायः ।

( आनन्दाश्रमस्थानीयमॅनेजिंगट्रस्टी ) ।

# मीमांसाविद्यालयविज्ञानम् ।

विदितमेवेद वः किल भगवतो जैमिनेर्दर्शनं सर्वोत्कर्षेण सर्वदर्शनमूर्धाभिषिक्तमिति जेगीयते विद्वद्वरेण्यैरिति । यस्य च दर्शनस्य अध्ययनाध्यापनकृते भूयसाऽनेहसा प्रयतमानेन मीमांसाविद्यालयपरिषन्मण्डलेन भूयो द्रव्यं व्ययीकृत्य, ये च महीशूरराजकीयपरीक्षाग्रामिति मीमांसाविद्वत्परीक्षाया प्रथमकक्ष्यायामुत्तीर्णा ब्रह्मश्रीसुब्रह्मण्यशास्त्रिणः, ये च पुनर्ब्रह्मश्रीविद्वच्छिरोमणि के० रामशास्त्रि (कृष्णशास्त्र्यपरनामधेय) धर्माधिकारिकृपाकटाक्षेण, श्री ६ महामहोपाध्याय पूज्यपादविरूपाक्षशास्त्रिणामनुग्रहेण च, श्री १०८ श्रीमद्भगवत्पूज्यपादीयाहर्निशनारायणस्मरणकृतसहायेन विद्यालयोद्दिष्टकार्यार्थमात्मसात्कृताः । ताश्च तत आनीय विद्यालये तन्त्रवार्तिकटुप्टीकायुतशाबरभाष्यसहितजैमिनिदर्शनसंशोधनकार्येऽध्यापनकार्ये च ते नियोजिताः । तैश्चैतत्कार्यं सावधानतया कृतम् । एवं संशोधितं पुस्तकमानन्दाश्रमाधिकारि 'विनायक गणेश आपटे' इत्येतेषां सविधे समर्पितम् । तैश्च तदेतावत्कालेनाऽऽनन्त्रवार्तिकं भागद्वये आनन्दाश्रमसंस्कृतग्रन्थावल्या प्रकाशितम् । अतस्तेषामुपकारभरमाजीवितं विद्यालयो न विस्मरिष्यति ।

मीमांसाशास्त्रशाबरभाष्यवार्तिकविषये यत्किंचित्पण्डितप्रकाण्डानां वक्तव्यमासीत्तत्सर्वं विस्तरशः श्री ६ पूज्यपादैः प्रथमभागीयोपोद्घाते निरवर्णीति नात्र किमप्युल्लेख्यमवशिष्यते ।

परमन्यदेतदेकमेवास्माकमिदानीं कार्यं यन्निम्नप्रदर्शितान् प्रति उपकृताः स्मः ।

अतिकठिनेऽस्मिन्भाष्यवार्तिकादिग्रन्थसंशोधनकार्ये येर्द्रव्यद्वारा पुस्तकादिद्वारा च साहाय्यमन्वष्ठायि तेषां नाममात्रमत्रोल्लिख्य वयमनृणाः स्मः ।

१ भाण्डारकर ओरि० रि० इन्स्टिट्यूट इत्याख्यसंस्थाद्वारा डॉ. श्रीपाद कृष्ण बेलवलकर

२ एल्फिन्स्टन कॉलेज इत्याख्यमहाशालाद्वारा 'अश्वत्थामा बाळाचार्य गजेंद्रगडकर'

३ आगतमीमांसाशास्त्रतत्त्वा भिषजामग्रेसराः 'नरहरि शिवराम पराजपे'

४ आनन्दाश्रमविश्वस्तव्यवस्थापकमहाशयाः 'दत्तात्रेय वामन पोतदार'

तत्र प्रथमो भागो मीमांसाशास्त्रमर्मज्ञजिज्ञासुभिर्नागपुरीयैर्महाभागैः संशोधनद्रव्यं प्रदाय उपकृतो मीमांसाविद्यालयः ।

द्वितीयोऽपि भागस्तु विदर्भदेशालंकरणभूत 'बुलढाणा' नगरवासिनिर्दिष्टे—कानिटकर—काळे—इत्यादि—पाठमूल इत्येतैर्महाशयैः संशोधनद्रव्यं प्रदाय ऋणीकृतो विद्यालयः ।

तदेतेषामनुकूलसमयेऽपि कृतसहायानां जैमिनीयतन्त्रसंशोधनदत्तदृष्टीनामुपकारकृतिः कथं नु नामास्माकं विस्मरणमियात् ।

एतावता भूयसा द्रव्यव्ययेन भागद्वये तृतीयाध्यायान्तं तन्त्रवार्तिकशाबरभाष्ययुतं च जैमिनेर्दर्शनं समाप्तिमगात् । अवशिष्टे तृतीये भागे टुप्टीकाशाबरभाष्यसहितं जैमिनेर्दर्शनमचिरादेव विद्यालयेन संशोध्याऽऽनन्दाश्रमाधिकारिणा हस्ते समर्प्येत । तैश्चापि सानन्दं तत्प्रकाश्येत । इति सर्वेषामुपकारजातं स्मारं स्मारमस्माद्विज्ञानाद्विरतिमनुभवामः ।

अङ्गत्वनिरुक्तिर्नामापूर्वोऽयं ग्रन्थः श्रीगुरुवर्यवैद्यनाथशास्त्रिभिर्महता प्रयासेन विद्यालयाय संशोध्य समर्पितः सोऽप्यत्र निवेशितः । केयमस्यापूर्वता वर्णनीया—भगवतो जैमिनेः सूत्राणि त्रयः किल विद्वन्मूर्धन्या भगवत्या वाग्देवताया उपासका व्याचिख्यासुः । मुरारिमिश्रः प्रभाकरः कुमारिलभट्टश्च । तत्र भगवन्तौ कुमारिलभट्टप्रभाकरौ विदुषां संसदि सुप्रथितौ स्तः । भगवान् मुरारिस्तु प्रायः स्मृतिपथाद्ग्रन्थतो नामतोऽपि चातीतः । अतोऽस्य ग्रन्थजातं दुर्लभं तथाऽपि गुरुचरणैस्तन्महता परिश्रमेण संपाद्य उत्तमरीत्या संशोध्य विद्यालयकृतेऽर्पितमिति पुनरेकवारं तेषामुपकृतीः प्रशंसन्तो विरमामः । यदुल्लेखं विना चैतद्विज्ञानोल्लेखमसमाप्तं न भवति तच्चैतत्—उप्पिनबेट्टगिरिकुलभूषणैस्तर्कालंकारतर्कविद्वान् , इत्यादिविद्वद्भिर्दत्तसादरसमर्पितपदवीभूषितविग्रहैः, धारवाडनगरीयजगद्गुरुशंकराचार्यपाठशालीयप्रधानसंस्कृताध्यापकैर्नागेशशास्त्रिभिः प्रथमद्वितीयभागसंशोधने यदतुलसाहाय्यकमाचरितं तदुपकारभराक्रान्ता वयं पुनस्तदग्रे कथमपि उन्नता भवामः । इति शिवम् ।

विद्वद्वशंवदौ

पुण्यपत्तनीयमीमांसाविद्यालय.

वामन रामचंद्र किंजवडेकर.
दिनकर बलवंत देवधर. एम्. ए.
मीमांसाविद्यालयकार्यकारिसमितिकार्यवाहाध्यक्षौ.

# मीमांसादर्शने द्वितीयभागे भाष्यकारीयाधिकरणसूचीपत्रम् ।


| अधिकरणनामानि | उपक्रमोपसंहारावेदिनी संख्या |
| --- | --- |
| **अ** | |
| अग्निविहरणादिमन्त्रविनियोगाधिकरणम् । | ७५८–७५९ |
| अनारभ्याधीतमासद्वयस्य प्रकृतावनिवेशाधिकरणम् । | १०२९–१०३२ |
| अनुज्ञापूर्वकं भक्षाधिकरणम् । | १०११ |
| अनुवषट्कारदेवतानुपलक्षणाधिकरणम् । | ७९७ |
| अन्तर्वेदिबहिर्वेदिपदलक्षितदेशविशेषस्य यूपधानाङ्गताधिकरणम् । | १०८२–१०८४ |
| अभिक्रमणाधिकरणम् । | ७२९–७३१ |
| अभिमर्शनादेरङ्गप्रधानसाधारणहविर्मात्रार्थताधिकरणम् । | १०७९–१०८० |
| अभ्यासाधिकरणम् । | ४६७–४७२ |
| अ[illegible] अहर्योज्योतिष्टोमार्थताधिकरणम् । | ६०९–६१० |
| अरुणाधिकरणम् । | ६७३–६९८ |
| अवेष्ट्यधिकरणम् । | ५७८–५८८ |
| अश्वप्रतिग्रहेष्ट्यधिकरणम् । | ९६३–९६९ |
| अहीनाधिकरणम् । | ८६२–८६५ |
| **आ** | |
| आग्नेयपुन श्रुतेस्तुल्यार्थताधिकरणम् । | ६२१–६२२ |
| आग्नेय्यधिकरणम् । | ७७३–७८१ |
| आघाराग्निहोत्राधिकरणम् । | ४९७–५०९ |
| आधानस्य पवमानेष्ट्यनङ्गताधिकरणम् । | १०३७–१०३८ |
| आधानस्य प्रकृतिविकृत्यर्थताधिकरणम् । | १०३८–१०४० |
| आनन्तर्यानियामकत्वाधिकरणम् । | ७४०–७४२ |
| आनर्थक्यतदङ्गाधिकरणम् । | ७२७–७२९ |
| **इ** | |
| इन्द्रपीताधिकरणम् । | ७८६–७८८<br>८०१–८०२ |
| इन्द्रियकामाधिकरणम् । | ५३९–५५१ |

| अधिकरणनामानि | उपक्रमोपसंहारावेदिनी संख्या |
|---|---|

इष्टकाधर्माणामनारभ्योत्पन्नविनियुक्तचित्रिण्यादीष्टकार्थताधि० १०५६

उ

उद्गातृचमसे समुब्रह्मण्याना भक्षप्रतिपादनाधिकरणम् । १००१–१००४

उपगातृणामृत्विग्भ्योऽनन्यत्वाधिकरणम् । १०९४

उपवीतस्य दर्शपूर्णमासाङ्गताधिकरणम् । ७३२–७३६

उपांशुत्वस्य काम्येष्टिप्रधानमात्रार्थत्वाधिकरणम् । ११३६

उपांशुयाजाद्यर्थहविर्भ्यः शेषकार्याननुष्ठानाधिकरणम् । ९८९–९९४

उपांशुयाजाधिकरणम् । ४८९–४९७

ऋ

ऋत्विक्परिक्रयकाराणां सर्वर्त्विग्धर्मताधिकरणम् । १११६–१११७

ऋत्विजां संख्यानियमाधिकरणम् । १०८९–१०९१

ए

एकपात्राणामनुज्ञाप्य भक्षणाधिकरणम् । १०१२–१०१३

एकपात्रे भक्षसमुच्चयाधिकरणम् । १००९–१०१०

ऐ

ऐन्द्रवायवस्य भक्षातन्त्रत्वाभावाधिकरणम् । ९९७–९९८

ऐन्द्राग्नभक्षस्यामन्त्रकत्वाधिकरणम् । ७९९–८००

ऐन्द्राधिकरणम् । ७९२–७९९

क

करणमन्त्रेऽभिकाङ्क्ष्यफलस्य याजमानत्वाधिकरणम् । ११३०–११३२

करणमन्त्रेषु कर्मोपयोगिप्रकाश्यमानफलस्य ऋत्विगा-
मित्वाधिकरणम् । ११३२

कर्माधिकरणम् । ९००–९४३

क्रमविनियोगाधिकरणम् । ८१९–८२०

ग

गायत्रच्छन्दस इत्यादिनानाछन्दस्कं विनियोगाधिकरणम् । ८०१

गुणकामानामाश्रयेण सह सामानविध्याभावाधिकरणम् । १०९०–१०७३

| अधिकरणनामानि | उपक्रमोपसंहारावेदिनी संख्या |
|---|---|
| गुणजन्यकामानां याजमानत्वाधिकरणम् । | १११७–१११८ |
| गुणप्रत्युदाहरणाधिकरणम् । | ९३९ |
| गुणमुख्यव्यतिक्रमाधिकरणम् । | ८०९–८१४ |
| गुणाधिकरणम् । | ९३१–९३९ |
| ग्रहधर्माणामनारभ्याधीतानां ध्रुवादाभ्यग्रहार्थताधिकरणम् । | १०५५–१०५६ |
| ग्रहधर्माणां सवनत्रयसवनीयग्रहार्थताधिकरणम् । | १०५३ |
| ग्रहैकत्वाधिकरणम् । | ६९९–७२४ |
| **च** | |
| चतुर्धाकरणस्य भक्षार्थताधिकरणम् । | ९८६–९८८ |
| चतुर्धाकरणाधिकरणम् । | ७४२–७४५ |
| चमसहोमेऽध्वर्युकर्तृकत्वाधिकरणम् । | ११०८–११०९ |
| चमसाधिकरणम् । | ७२४–[illegible] |
| चमसाध्वर्यूणां दशत्वनियमाधिकरणम् । | १०९२ |
| चमसाध्वर्यूणां पृथक्त्वाधिकरणम् । | १०९१ |
| चमसाध्वर्यूणां बहुत्वाधिकरणम् । | १०९१–१०९२ |
| चमसिनां सोमभक्षप्रतिपादनाधिकरणम् । | ९९९–१००० |
| चयनस्याग्निसंस्कारार्थताधिकरणम् । | ६१०–६१३ |
| चरोरुपधानार्थताधिकरणम् । | ६०४–६०६ |
| **ज** | |
| जञ्जभ्यमानाधिकरणम् । | ८६८–८७१ |
| जयादीनां वैदिककर्माङ्गत्वाधिकरणम् । | ९९५–९९७ |
| जाघन्यधिकरणम् । | ८६८–८७१ |
| **त** | |
| तपसो याजमानत्वाधिकरणम् | १११५–१११६ |
| तृप्तिप्रकाशकमन्त्रस्य भक्षमन्त्रैकवाक्यताधिकरणम् । | ७८५–७८६ |
| तेषामर्थाधिकरणम् । | ६६५–६७० |
| **द** | |
| दक्षिणहविर्धानदेशस्यानुवचनार्थताधिकरणम् । | १०८४–१०८६ |
| दक्षिणादानस्य यजमानकर्तृकत्वाधिकरणम् । | १११२ |
| दाक्षायणयज्ञाधिकरणम् । | ९५४–९५७ |

| अधिकरणनामानि | उपक्रमोपसंहारावेदिनी संख्या |
|---|---|
| दिग्विभागाधिकरणम् । | ८९८-८९९ |
| दीक्षादक्षिणयोः प्रधानमात्रार्थताधिकरणम् । | १०८१-१०८२ |
| हृतिनवनीताज्यस्य श्येनप्रयोगान्निर्वर्त्याज्यकार्यार्थताधिकरणम् । | ११३६-११३७ |
| देवतासंयोगाभावे यागाविधायकत्वाधिकरणम् । | ६०२-६०४ |
| द्रव्यदेवतासंयोगे यागविधायकत्वाधिकरणम् । | ५९७-६०२ |
| द्रव्यविषये, उद्देश्यतावच्छेदकनिरूपणाधिकरणम् । | ६७१-६७२ |
| द्रव्यसंस्काराणामङ्गप्रधानार्थताधिकरणम् । | ११३३ |
| द्वादशद्वन्द्वानामाध्वर्यवत्वाधिकरणम् । | ११२२-११२३ |
| द्व्याम्नातानामुभयप्रयोज्यत्वाधिकरणम् । | ११२० |
| **न** | |
| नित्यनैमित्तिकयोरसामानविध्याधिकरणम् । | १०५६-१०५८ |
| निवीताधिकरणम् । | ८८९-८९५ |
| नैमित्तिकप्रतिपदादेरुत्कर्षाधिकरणम् । | ८६५-८६७ |
| नैमित्तिकमासद्वयादे प्रकृत्यर्थताधिकरणम् । | १०३२-१०३७ |
| **प** | |
| परुषिदिताधिकरणम् । | ८०९-९०० |
| पर्णतादे प्रकृत्यर्थताधिकरणम् । | १०२५-१०२९ |
| पवमानेष्टिषु पवमानेष्ट्यन्तदिदेशाधिकरणम् । | १०४०-१०४२ |
| पशुधर्माणामुपाकरणादीनामग्नीषोमीयमात्रार्थताधिकरणम् । | १०४२-१०५२ |
| पशुसोमाधिकरणम् । | ५१९-५२२ |
| पात्नीवतभक्षणे त्रयस्त्रिंशतोऽनुपलक्षणाधिकरणम् । | ७९४-७९७ |
| पात्नीवतभक्षणे त्वष्टुरनुपलक्षणाधिकरणम् । | ७९३-७९४ |
| पात्नीवतभक्षणे पूर्वदेवतानुपलक्षणाधिकरणम् । | ७९१-७९३ |
| पात्नीवताधिकरणम् । | ६०६-६०८ |
| पुनरभ्युन्नीतभक्षणे, इन्द्रस्याप्युपलक्षणाधिकरणम् । | ७८८-७९१ |
| पेषणस्य चरुविनियोगाधिकरणम् । | ८८१-८८३ |
| पेषणस्य पूषमात्रदेवत्यचरुविनियोगाधिकरणम् । | ८८३-८८९ |
| पेषणाधिकरणम् । | ८८०-८८१ |
| पौर्णमास्यधिकरणम् । | ४७३-४८९ |
| प्रकरणविनियोगाधिकरणम् । | ८१६-८१८ |

| अधिकरणनामानि | उपक्रमोपसंहारावेदिनी संख्या |
|---|---|
| प्रकरणान्तराधिकरणम् । | ११२–११७ |
| प्रकृतपुरोडाशादीनां निधानार्थताधिकरणम् । | ११३५–११३६ |
| प्रकृतावपि लवनादेरसर्वार्थताधिकरणम् । | ११३४–११३५ |
| प्रथमोपस्थितेन शेषकर्मानुष्ठानाधिकरणम् । | ९८६ |
| प्रवर्ग्याधिकरणम् । | ८७६–८८० |
| प्राकृतधर्माणां विकृतावपूर्वपदार्थानङ्गत्वाधिकरणम् । | ११३३–११३४ |
| प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वाधिकरणम् । | ११२७–११२८ |
| प्रैषस्याऽऽध्वर्यवत्वाधिकरणम् । | ११२९ |
| प्रैषान्तानुवचनेष्वेव मैत्रावरुणस्य कर्तृतानियमाधिकरणम् । | ११०६–११०८ |
| प्रोत्साहनमन्त्राणां याजमानत्वाधिकरणम् । | १११८–१११९ |

फ

| | |
|---|---|
| फलचमसाधिकरणम् । | १०१६–१०२० |
| फलसंस्कार्ययोः कर्मभेदकत्वाधिकरणम् । | ११७–११८ |

ब

| | |
|---|---|
| बर्हिरादीनामङ्गप्रधानसाधारण्याधिकरणम् । | १०७३–१०७७ |
| बलाबलाधिकरणम् । | ८२१–८६२ |
| ब्रह्मादीनामृत्विक्त्वनियमाधिकरणम् । | १०९९–११०१ |

भ

| | |
|---|---|
| भक्षानुवाकस्य यथालिङ्गं विनियोगाधिकरणम् । | ७८२–७८९ |

म

| | |
|---|---|
| मन्त्राणां मुख्यार्थविनियोगाधिकरणम् । | ७४९–७६१ |
| मुख्यप्रतिनिध्योः सामानविध्याधिकरणम् । | १०५८–१०५९ |
| मुख्यमन्दसदृशप्रतिनिध्योः सामानविध्याधिकरणम् । | १०५९–१०६० |

य

| | |
|---|---|
| यजमानभिन्नकर्त्रन्तरप्रतिपादनाधिकरणम् । | १०८६–१०८९ |
| यजमानसोमवमने, इष्टिविधानाधिकरणम् । | ९७१–९७३ |
| यजमानस्य वषट्कारभक्षप्रतिपादनाधिकरणम् । | १०१६–१०२६ |
| यजमानसंस्काराणां प्रधानमात्रार्थताधिकरणम् । | १०७७–१०७८ |
| यावज्जीवाधिकरणम् । | १२३–१३१ |

र

| | |
|---|---|
| रथंतराधिकरणम् । | ९७०–७७८ |

| अधिकरणनामानि | उपक्रमोपसंहाराावेदिनी संख्या |
| --- | --- |
| रशनाधर्मसाधारण्याधिकरणम् । | १०५४–१०५५ |
| राजन्यचमसे ब्राह्मणाना भक्षप्रतिपादनाधिकरणम् । | १०२१–१०२४ |
| रैवत्यधिकरणम् । | ९९२–९९३ |
| ल | |
| लिङ्गस्य दुर्बलप्रमाणोपजीवित्वाधिकरणम् । | ७७१–७७३ |
| व | |
| वपनादिसंस्काराणा याजमानत्वाधिकरणम् । | १११३–१११५ |
| वमनाधिकरणम् । | ९६९–९७१ |
| वषट्कर्तुः प्रथमं भक्षप्रतिपादनाधिकरणम् । | १०१०–१०११ |
| वषट्कारनिमित्तकभक्षान्तरप्रतिपादनाधिकरणम् । | १००३–१००८ |
| वाजपेयादावभिज्ञस्यैव वाचनाधिकरणम् । | ११२१–११२२ |
| वारणादीना सर्वयज्ञाङ्गताधिकरणम् । | ७३६–७३८ |
| वारुणेष्टौ वैदिकाश्वदाननिमित्तताधिकरणम् । | ९९७–९९३ |
| वार्त्रघ्न्यादीनामाज्यभागाङ्गताधिकरणम् । | ७३८–७४० |
| विशिष्टाधानविधेयत्वाधिकरणम् । | ९८८–९९४ |
| वेदभेदेन श्रूयमाणेषु कर्मोत्पत्तिनिर्णयाधिकरणम् । | ८१५ ८१६ |
| वेदोपक्रमाधिकरणम् । | ८०३–८०९ |
| वैदिकमन्त्रेणानुज्ञानाधिकरणम् । | १०१२ |
| वैदिकमन्त्रेणानुज्ञापनाधिकरणम् । | १०१२ |
| श | |
| शब्दान्तराधिकरणम् । | ४६१–४६७ |
| शमितुरपृथक्त्वाधिकरणम् । | १०९२–१०९३ |
| शाखान्तराधिकरणम् । | ६३१–६४६ |
| शाखाहरणादीनामुभयदोहार्थताधिकरणम् । | १०५२–१०५३ |
| शेषप्रतिज्ञाधिकरणम् । | ६४७–६५३ |
| शेषत्वनिर्वचनाधिकरणम् । | ६५३–६६० |
| शेषत्वस्य लक्ष्यनिर्देशाधिकरणम् । | ६६०–६६४ |
| श्येनादौ प्राकृताङ्गेषु नानाकर्तृकत्वाधिकरणम् । | ११०९–११११ |
| स | |
| समाख्ययाऽध्वर्य्वादीना नियतपदार्थकर्तृताधिकरणम् । | ११०२–११०५ |

| अधिकरणनामानि | उपक्रमोपसंहारावेदिनी संख्या |
| --- | --- |
| समाख्याविनियोगाधिकरणम् । | ८२०–८२१ |
| संख्याधिकरणम् । | ९२२–९२८ |
| सञ्ज्ञाधिकरणम् । | ९२८–९३१ |
| संतर्दनाधिकरणम् । | ८७१–८७९ |
| संनिधौ फलादेः कर्मभेदकत्वाभावाधिकरणम् । | ६१९–६२० |
| संवादाधिकरणम् । | ९९१–९९२ |
| सर्वपरिदानाधिकरणम् । | ९४९–९५० |
| सर्वपृष्ठाया शेषकार्येतन्त्रताधिकरणम् । | ९९६–९९७ |
| सर्वप्रदानाधिकरणम् । | ९७३–९८३ |
| सर्वेभ्य. शेषकार्यानुष्ठानाधिकरणम् | ९८४–९८९ |
| सर्वेषामृत्विक्शब्दावाच्यताधिकरणम् । | १०९४ |
| सर्वेषामेव श्येनीयाज्यकार्थाणा हानिनवनीताधिकरणम् । | ११३७–११३९ |
| सवनीयहविषा मासमयत्वाधिकरणम् । | ११३९–११४० |
| साकंप्रस्थाय्ये शेषकार्याननुष्ठानाधिकरणम् । | ९९४ |
| सामान्यसमाख्यातकर्तुर्विशेषसमाख्यादिना बाधाधिकरणम् । | ११०६ |
| सूक्तवाकस्य विभज्य विनियोगाधिकरणम् । | ७६९–७७० |
| सूक्तवाकाधिकरणम् । | ७५९–७६४ |
| सोमविक्रेतुर्वृतस्य पृथक्त्वाधिकरणम् । | १०९४ |
| सोमे भक्षप्रतिपादनाधिकरणम् । | ९९८–९९९ |
| सौत्रामण्या शेषकार्याननुष्ठानाधिकरणम् । | ९९४–९९५ |
| सौभराधिकरणम् । | ९६३–९७० |
| सौमिकवेदेरङ्गप्रधानार्थताधिकरणम् । | १०७८–१०८० |
| स्वामिनः सप्तदशत्वाधिकरणम् । | १०११–११०२ |
| **ह** | |
| हविष्कृन्मन्त्रविनियोगाधिकरणम् । | ७५५–७५८ |
| हारियोजने अवस्तुतोऽपि भक्षप्रतिपादनाधिकरणम् । | १००४–१००६ |
| हिरण्यधारणाधिकरणम् । | ९९३–९९५ |
| होतुः करणमन्त्रानुष्ठातृत्वाधिकरणम् । | ११२३–११२७ |
| होमाभिषवनिमित्तकभक्षप्रतिपादनाधिकरणम् । | १००८–१००९ |

समाप्तं चाधिकरणवर्णानुक्रमसूचीपत्रम् ।

## अथ तृतीयेऽध्याये षष्ठः पादः ॥

### [१] सर्वार्थमप्रकरणात् ॥ १ ॥ पू०

अनारभ्य किंचिदुच्यते । यस्य खादिरः स्रुवो भवति स च्छन्दसामेव रसेनावद्यति । सरसा अस्याऽऽहुतयो भवन्ति । यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति, इत्येवमादि । तत्र संदेहः । किं, खादिरता स्रुवे, पालाशता जुह्वां, प्रकृतौ निविशत उत प्रकृतौ विकृतौ चेति । किं प्राप्तम् । सर्वार्थमप्रकरणात् । प्रकृतिविकृत्यर्थमेवंजातीयकम् । कुतः । अप्रकरणात् । न कस्यचित्प्रकरणे श्रूयन्ते । तानि वाक्येन सर्वत्र भवेयुरिति ॥ १ ॥

### प्रकृतौ वाऽद्विरुक्तत्वात् ॥ २ ॥ सि०

प्रकृतौ वा निविशेरन्ननारभ्याधीतानि पात्राणि । कुतः । अद्विरुक्तत्वात् । एवमद्विरुक्तं भविष्यतीति । द्विरुक्ततायां को दोषः । असंभव इति ब्रूमः । यद्धि प्रकृतौ विकृतौ च भवति, अभिन्नं तत्, प्रकृतौ । प्रकृतौ

---

इदानीमनारभ्याधीतानां प्रकृतिलिङ्गासंयुक्तानां प्रकरणसंबन्धे सति किं प्रकृतिप्रकरणसंबन्ध उत सर्वार्थत्वमिति विचारः । तत्र श्रुत्यादिषट्काभावेऽप्यप्रतिग्रहेष्टिवत्क्रतुसंबन्धो योजयितव्यः । स्रुवाद्युद्देशेन हि, अत्र खादिरत्वादीनि विधीयन्ते । ते च स्रुवादयः 'स्रुवेणावद्यति' 'स्रुवेणाऽऽघारमाघारयति' 'स्रुवेण पार्वणौ जुहोति' 'जुह्वा जुहोति' इत्यादिभिर्वाक्यैः कर्माङ्गत्वेन प्रतिपादिताः । तत्संबन्धित्वेन चोपनीतमात्राण्येव खादिरत्वादीनि स्रुवसंस्पर्शिना क्रतुकथंभावेन गृह्यन्ते । न हि तेषामन्यत्फलमस्तीति चतुर्थे वक्ष्यामः । न च निर्व्यापाराज्जातिविशेषात्फलोत्पत्तिरवकल्पते । न च व्यापारसंबन्धजननार्था काचित्क्रिया प्रस्तुता दृश्यते । नापि वाक्योपात्ता । न चात्र स्रुवादिर्विधीयते, वाक्यभेदप्रसङ्गात् । अतः स्रुवाद्यनुवादेन विधीयमानानां खादिरत्वादीनां स्रुवादिस्वरूपेऽन्यथाऽप्युपपद्यमानेऽनर्थकं विधानमिति तदुपप्लावितकर्मसंबन्धो विज्ञायते । तत्रानारभ्यवादत्वादेव स्रुवादिसंबन्धस्य प्रकृतिविकृतिष्वविशेषात्सर्वार्थत्वमिति पूर्वः पक्षः ॥ १ ॥

सर्वविधीनामप्राप्तस्वविषयत्वाद्यत्र प्रमाणान्तरेण प्राप्तिर्नास्ति तत्र खादिरत्वाद्युपदेशः । प्रकृतौ च न कुतश्चित्प्राप्तिः । विकृतिष्वङ्गान्तरार्थमवश्यकल्पनीयेनातिदेशेन खादि-

---

१ अन्यथा—कार्यान्तरणस्यैव ।

चेदस्ति, चोदकेनैव विकृतिं प्राप्नोति । ततो नानारभ्यविधिमाकाङ्क्षति । तस्मादनाकाङ्क्षितत्वादनारभ्यविधिर्न तत्र विदधाति । तेन ब्रूमः प्रकृत्यर्थ एवेति ॥ २ ॥

तद्वर्जं तु वचनप्राप्ते ॥ ३ ॥

अप्रकरणात्प्रकृतिविकृत्यर्थमेवेत्युच्यते । यत्तु, चोदकेन प्राप्नोतीति । अनारभ्यविधिना प्राप्ते न चोदकमाकाङ्क्षति । तस्मादनारभ्यविधिवर्जं चोदकः प्रापयिष्यति । अनारभ्यविधिवाक्येन प्रत्यक्षेण स्रुवे खादिरता, चोदकवाक्येनाऽऽनुमानिकेन विकृतौ । आनुमानिकाच्च प्रत्यक्षं बलवत् । तस्मात्प्रकृतिविकृत्यर्थोऽनारभ्यविधिः ॥ ३ ॥

दर्शनादिति चेत् ॥ ४ ॥

यद्यनारभ्यविधिश्चोदकाद्बलीयान्, अनारभ्यविधिना प्राप्ते न चोदकमाकाङ्क्षति ।निराकाङ्क्षे वैकृते कर्मणि चोदको नैव प्राप्नोति । तत्र प्रयाजादीनां दर्शनं नैवोपपद्येत । दृश्यन्ते च प्रयाजादयः क्वचित्, प्रयाजे प्रयाजे कृष्णलं जुहोति, इति । अथ चोदको बलीयांस्ततः एतद्दर्शनमुपपद्यते । तस्मात्प्रकृत्यर्थोऽनारभ्यविधिः ॥ ४ ॥

न चोदनैकार्थ्यात् ॥ ५ ॥

न प्रकृत्यर्थः सर्वार्थ इति ब्रूमः । अप्रकरणे समाम्नानात् । यदुक्तमनार-

---

रत्वाद्यपि प्राप्नोतीति नोपदेशमपेक्षते । तेन द्विरुक्तस्यासंभव इत्याह । तव द्विरुक्तत्वादद्विरुक्तत्वाद्वा ममेति सूत्रम् ॥ २ ॥

प्राप्तेरिति वा पाठः । सत्यं द्विरुक्तत्वमन्याय्यं, तत्र कुत एतदतिदेशप्राप्तत्वादुपदेशो विहन्यते, न पुनरुपदेशसिद्धमतिदेश एव प्रापयेदिति । युक्तं च पदार्थविप्रकर्षादतिदेशो न स्यात् । संनिकर्षात्तु पूर्वतरप्रवृत्तोपदेशाश्रयणम् । अथोच्येत, सामान्यविषयत्वादुपदेशो दुर्बल इति । तदतिदेशेऽपि सर्वाङ्गविषयत्वादविशिष्टम् । तस्मात्सर्वार्थोऽनारभ्यवाद इति ॥ ३ ॥

स्थितायां प्रतिज्ञायां चोदयति । यद्यतिदेशादुपदेशो बलवानेवं सति तेनैवोपदेशेनावरुद्धत्वादतिदेशो नैव स्यात् । कुत. । शक्नोति हि प्रकृतिविकृतिसाधारणं खादिरत्वं प्राकृतोपकारसाधने दृष्टशक्तित्वाद्विकृतिं निराकाङ्क्षीकर्तुम् । ततश्च प्रयाजादिदर्शनं विरुध्यते । तस्मादतिदेशविनिर्मुक्तायां प्रकृतावेव निवेशो युक्त इति ॥ ४ ॥

नैतावता शक्यं सर्वार्थत्वं व्यावर्तयितुम् । न ह्येकस्मिन्नंशेऽतिदेशो बाधितः सर्वत्रैव बाधितो भवति । तद्यथा शरैः कुशेषु निवर्तितेष्वपि न प्रयाजादयो निवर्त्यन्ते ।

भ्यविधिना निराकाङ्क्षस्य न चोदक इति । तन्नोपपद्यते । न ह्यनारभ्य-विधिश्चोदनां निराकाङ्क्षी करोति । प्राप्ते हि चोदकेन स्रुवे खादिरताऽ-नारभ्यविधिना शक्या विधातुम् । असति चोदकेऽनारभ्यविधिरपि नास्ति । न चानारभ्यविधिः स्रुवं प्रापयति, तस्य च खादिरताम् । कुतः । चोदनैकार्थ्यात् । एकार्था हि चोदना, यस्य खादिरः स्रुवो भवति, इति । न चात्र स्रुवः खादिरता चोभयं विधीयते । स्रुवस्य सतः खादिरतामेष शब्द आह । स च चोदकेन प्राप्तः । तस्मादस्ति चोदकः । स ह्यनारभ्यविधिवाक्यस्य प्रत्यक्षत्वात्तु वर्जयित्वाऽन्यं प्रापयति । तस्मात्प्रकृतिविकृत्यर्थोऽनारभ्यविधिः ॥ ५ ॥

## उत्पत्तिरिति चेत् ॥ ६ ॥

इति चेत्पश्यसि, उत्पत्तिरेषां प्रकृतिविधिभिस्तुल्या, प्रकृतावङ्गानि संक्षेपेण विस्तरेण चोद्यन्ते[1] । पञ्च प्रयाजान्यजति इति संक्षेपेण । समिधो यजति इत्येवमादिना विस्तरेण । इहापि यस्य खादिरः स्रुवो भवति, इत्येवमादिर्विस्तरः, यस्यैवंरूपाः[2] स्रुच इति संक्षेपः । एवं-रूपः प्रकृतौ विधिर्दृष्टः, अयमप्येवंरूपः । तस्मात्प्राकृत इति सामान्यतो दृष्टानुमानम् । तस्मात्प्रकृत्यर्थोऽनारभ्यविधिरिति ॥ ६ ॥

## न तुल्यत्वात् ॥ ७ ॥

नैतदेवम् । न ह्येवं जातीयकं सामान्यतो दृष्टं साधकं भवति ।

---

समानविषयमात्रे हि बाधो विज्ञायते । तेन खादिरत्वादिप्राप्त्यंशमात्रादतिदेशो निव-र्तते । न च खादिरत्वमक्रियात्मकत्वाच्छक्नोति विकृतिं निराकाङ्क्षीकर्तुम् । युगपच्च प्रकृतिविकृत्योः प्रवर्तमानमशक्यं क्लृप्तोपकारत्वेन निरूपयितुम् । साकाङ्क्षं तु तत्, स्रुवप्राप्त्यभावात् । न चातिदेशाभ्यनुज्ञामन्तरेण स्रुवप्राप्तिः सम्भवति । न चैत-द्वाक्यं स्रुवस्यापि विधायकम् । प्रधानक्रियानुपादाने सति विशिष्टविधानेऽनुपपद्यमाने वाक्यभेदप्रसङ्गात् । तस्मादनारभ्यवादविधिप्रापिते स्रुवस्य खादिरत्वे तद्धर्मातिदेशः कल्पयितव्यः ॥ ९ ॥

अत्र तार्किकः कश्चिदाह प्रकृत्यर्थोऽनारम्यविधिः संक्षेपविस्ताराभ्यां विधीयमानत्वा-त्प्रयाजादिवदिति ॥ ६ ॥

न तावदीदृशेऽर्थे[3]ऽनुमानस्य गतिरित्युक्तम्[4] । अपि चानुमानमप्येतन्न भवति ।

---

१ चोद्यन्त इति पा० । २ यस्यैवंरूपः स्रुव इति पा० । ३ ईदृशेऽर्थे—शब्दैकसमधिगम्येऽर्थ इत्यर्थः । ४ उक्तमिति—तर्कपादे प्रत्यक्षसूत्रे श्लोकवार्तिके । ' तस्माददृष्टपूर्वत्वात्केनचिद्वस्तुना सह । धर्मस्य नानुमेयत्वमसाधारणवस्तुवत् ॥ ९९ ॥ इत्यादिनोक्तमित्यर्थः ।

केवलमत्र प्राकृतविधिसारूप्यं, न तु प्रकृतावेतद्भवतीति प्रमाणमस्ति। अपि च विकृतावपि संक्षेपविस्तराभ्यामङ्गानि विधीयन्ते। तिस्र आहुतीर्जुहोति इति संक्षेपः। आमनमस्यामनस्य देवा इति विस्तरः। अतो वैकृतैरप्यनारभ्यविधयस्तुल्याः। तस्मादयमहेतुः प्रकृतिनिवेशस्य ॥ ७ ॥

## चोदनार्थकात्स्न्यात्तु मुख्यविप्रतिषेधात्प्रकृत्यर्थः ॥ ८ ॥

तुशब्दः पक्षं व्यावर्तयति। न सर्वार्थोऽनारभ्यविधिः। प्रकृत्यर्थः स इति ब्रूमः। कुतः। चोदनार्थकात्स्न्यात्। कृत्स्नं चोदकः प्रापयति, नानारभ्यविधिना वैकृतमपूर्वं निराकाङ्क्षम्। पात्राणां हि तद्वाक्येन,

---

अनैकान्तिकत्वात्। विकृतावपि सक्षेपविस्ताराभ्यां विधिरुपलभ्यते। तत्रैतत्स्यात्। एकेन विहितत्वात्संक्षेपविस्तारयोरन्यतरो नैव विधायक इति। तदपि प्रकृतौ तुल्यमिति हेतोरसिद्धता। तेनावश्यं विध्यनुवादनिरपेक्षं सक्षेपविस्ताराभिधानमात्रं हेतुर्वक्तव्यः। स चानैकान्तिक इत्युक्तम्। एवं वा। स्वगोत्रेण सूत्रद्वयं गमयितव्यम्। इति चेत्—तत्सर्वार्थत्वं पश्यसि, तदयुक्तम्। यत्र हि पात्राणां विनियोगोत्पत्तिस्तत्र तदङ्गं जातिर्विधातुं शक्यते। न च विकृतावुत्पत्तिः। अतः पात्रशून्यायां तस्यामशक्या जातिर्विधातुम्। प्राप्तिवैषम्यात्। यदि हि प्रकृतिविकृत्योस्तुल्यवत्पात्राणि प्राप्नुयुस्ततः सर्वावस्थोद्देशेन जातिविधानमवकल्पेत। न त्वेवम्। तस्मात्प्रकृत्यर्थतैव युक्तेति। तत्रोत्तरं 'न तुल्यत्वात्' इति। सर्वथाऽनारभ्यवादः प्राप्तिमपेक्षते। तत्र या चोपदेशेन प्राप्तिर्या चातिदेशेन प्राप्तिः सा सर्वाऽपि प्राप्तित्वेन तुल्या। यद्यप्युपदेशातिदेशयोः सनिकर्षविप्रकर्षौ विद्येते तथाऽपि तौ स्वविषय एव बलाबलं कुरुतो नानारभ्यवादेन सह। अनारभ्यवादो हि पात्रद्वारेण क्रतुगामित्वाद्विप्रकृष्टतरः। तस्मात्सर्वार्थः। तद्धर्मं चातिदेशः ॥ ७ ॥

'प्रकृतौ वा द्विरुक्तत्वात्' इत्येतदेव न्याय्यम्। यत्तु तद्धर्मं यापयिष्यतीति। तदयुक्तम्। कुतः।

> वर्तेत यदि भेदेन प्रकृत्यङ्गेषु चोदकः।
> तत एवं भवेदेषु युगपत्तु प्रवर्तते ॥

पदार्थातिदेशपक्षे शास्त्रातिदेशपक्षे वा तद्भेदात्कदाचिद्भेदो भवेत्। यागगतस्तु व्यापारोऽतिदिश्यत इति दशमे वक्ष्याम। स च निरवयवत्वाद्युगपदतिदिश्यते। अनेन चाऽऽत्मसिद्ध्यर्थं युगपदेव प्रयाजाद्यपूर्वाणि गृह्यन्ते। तैश्च प्रयाजादयः। प्रयाजादिभिरपि स्वशास्त्राणि। तेन प्रकृतिवदित्येवंरूपस्यातिदेशस्यैकत्वा-

न यागानाम् । यागाश्चोदनालिङ्गसंयोगात्प्रकृतिमपेक्षन्ते, तथा सहैकवाक्यतां यान्ति । प्राकृताश्च ताञ्छक्नुवन्ति निराकाङ्क्षीकर्तुं, नानारभ्यविधयः । तस्मादवश्यं चोदक उत्पादयितव्यः । स चेदुत्पाद्यते, नार्थोऽनारभ्यविधिना । न चासौ प्रकरणादीनामभावात्प्रवर्तमानोऽपि वैकृतेन यागेन संबध्येत । तस्माद्वैकृतेन कर्मणा नानारभ्यविधिः संबध्यते । न तस्य वैकृतस्य मुख्यस्यानारभ्यविधिर्वाक्यशेषः । प्रकृतौ वेति विप्रतिषेधे, चोदकसामर्थ्यात्प्राकृते वाक्यशेषे प्राप्तेऽनारभ्यविधिर्न भविष्यति । तस्मादनारभ्यविधिः प्रकृत्यर्थः ॥ ८ ॥

[२] प्रकरणविशेषात्तु विकृतौ विरोधि स्यात् ॥ ९ ॥ सि०

अनारभ्य किंचित् , सामिधेनीनां परिमाणमाम्नातं, सप्तदश सामिधेनीरनुब्रूयात्, इति । तत्र संदेहः । किमेतत्प्रकृतावुत विकृताविति ।

---

त्सर्वाङ्गेष्वविशिष्टस्य सर्वत्र प्रवृत्तिरप्रवृत्तिर्वा, नैकदेशेषु । शरैरपि कुशाः प्राप्ता एव बाध्यन्त इत्युक्तं बलाबलाधिकरणे । तद्यदि तावदनारभ्यवादानुरोधेन खादिरत्वादिविषयेऽतिदेशः परित्यज्यते तत एवाङ्गान्तरेष्वपीति सर्वनिवृत्तिप्रसङ्गः । तत्र चोक्तम् । अथ केषांचित्प्राकृतानामनुरोधेन तद्विषयोऽतिदेशः प्रमाणं क्रियते, ततः खादिरत्वादिप्राप्तिरप्यविशिष्टेति स्फुटं द्विरुक्तत्वं प्राप्नोति । यागगतव्यापारापेक्षित्वाच्च स्वप्रकरणाम्नानमप्यतिक्रम्य विकृतयः प्राकृतं तावद्गृह्णन्तीति सर्वत्र स्थापयिष्याम. । तेनाप्यनारभ्यवादादतिदेशप्राप्तेः प्राथम्यम् । अवश्यं च प्रकृतिषु स्रुवादिप्राप्तिरपेक्षितव्या । यावता च यत्र न स्रुवादयः प्राप्नुवन्ति तावता खादिरत्वादयोऽपीति नोपदेशविषयत्वं घटते । न चैषा क्रतुसंबन्धो विस्पष्टः । सोऽप्यन्यथाऽनुपपत्त्या स्रुवादिद्वारेण कल्पयितव्य. । सर्वार्थत्ववादी च प्रकृतिसबन्धं तावदभ्युपगच्छति । तेन च परिहृत आनर्थक्ये विकृतिसंबन्धो निष्प्रमाणकः। प्रमाणवत्तरो ह्यतिदेशेन क्रतुसंबन्धः। येषां तु क्रतुसंबन्ध एव प्रत्यक्षस्तेऽनारभ्यवादा अपि सर्वार्था एव । यथा ' एष वै सप्तदश. प्रजापतिर्यज्ञमन्वायत्तः ' इत्येवमादयः । तस्मात्खादिरत्वादि प्रकृत्यर्थमिति सिद्धम् ॥ ८ ॥

( इति—पर्णतादेः प्रकृत्यर्थताधिकरणम् ॥ १ ॥)

---

अपवादाधिकरणमेतत् । तत्र पूर्वाधिकरणेनैव सामिधेनीसाप्तदश्यानारभ्यवादस्य प्रकृ-

---

१ ( अ० ३ पा० ३ अ० ७ ) २ उक्तमिति—'न चोदनैकार्थ्यात्' इति सूत्रे 'न च खादिरत्वमक्रियात्मकत्वाच्छक्नोति विकृतिं निराकाङ्क्षीकर्तुम्' इत्यादिनेत्यर्थः ।

किं प्राप्तम् । पूर्वेण न्यायेन प्रकृताविति प्राप्तम् । प्रकृतौ च पाञ्चदश्यमाम्नातं, तेन विकल्प इति । एवं प्राप्ते ब्रूमः । विकृतावेवंजातीयको विधिः स्यात् । कस्मात् । प्रकृतेः पाञ्चदश्येन निराकाङ्क्षत्वात् । ननु विकल्पो भविष्यतीत्युक्तम् । प्रकरणविशेषात्पाञ्चदश्येन न विकल्पः । विषमशासनात् । विकृतौ त्वानुमानिकं पाञ्चदश्यं बाधित्वाऽनारभ्यविधिवाक्येन प्रत्यक्षेण साप्तदश्यं निवेक्ष्यते। आह्विकं चैतत्प्रयोगवचनमुपसंहरिष्यति । तस्मादेवंजातीयकं विकृत्यर्थम् ॥ ९ ॥

---

त्यर्थत्वे, प्रकरणाधीतेन पाञ्चदश्येन सह विकल्प इति विशेषाशङ्कां निवर्तयति । कथं पुनः प्राकरणिकेन विशेषविधिना सहातुल्यबलस्य विकल्पोऽभिधीयते । आह ।

तत्र नाम विशेषेण सामान्यस्य निराक्रिया ।
प्रत्यक्षो यत्र संबन्धो विशेषेण प्रतीयते ॥

तुल्यप्रमाणको हि विशेषो बाधको भवति न दुर्बलप्रमाणकः । न च क्रतुप्रयोगादन्यत्र सामिधेन्यो विद्यन्ते । तस्मात्क्रतुप्रयोगप्राप्तिस्तुल्या । ततश्च किं प्रकरणमधिकं करिष्यति । द्वयोस्तुल्यबलयोः प्रमाणयोर्विरोधे सति बलवत्तरेण निर्णयः कर्तव्यः । न च प्रकरणं वाक्याद्बलवत्तरम् । अतो यावत्प्रकरणव्यापारो नैव भवति तावद्वाक्यद्वयेन तुल्यबलेन विकल्पोऽवधार्यते । तेन न्यूनबलं यद्यपि प्रकरणसहस्रमपि च सहायी भवति तथाऽपि न तदनुरोधः कर्तव्यः । तस्मात्प्रकृत्यर्थं साप्तदश्यमिति प्राप्ते ब्रूमः ।

तुल्यो यद्यपि संबन्धः सामिधेनीः प्रतीष्यते ।
तथाऽपि क्रतुसंबन्धवैषम्यान्न विकल्पते ॥

सामिधेनीस्वरूपप्रयुक्तत्वेऽनर्थिका संख्येत्यवश्यं यागात्पूर्वसाधनत्वकारितः संबन्धोऽभ्युपगन्तव्यः । न च यागापूर्वसाधनत्वं प्रकरणादृते लक्षयितुं शक्यते इति नवमे[2] वक्ष्यामः । तेन प्रकरणानुग्रहविशेषात्पाञ्चदश्यमपूर्वसंबन्धप्रमाणप्रत्यासत्तेर्बलीयः । विधिरपि हि पूर्वं प्रयोजनवति पुरुषं नियुङ्क्ते । साप्तदश्याच्च पाञ्चदश्यं शीघ्रतरं प्रयोजनवदवधार्येत इति विधिकालवैषम्यादतुल्यबलत्वम् । अपि च, क्रतुमविगुणं कर्तुं पुरुषः प्रवर्तते न सामिधेनीः । क्रत्वङ्गत्वे च साप्तदश्यस्य न किंचिच्छ्रुत्यादि प्रमाणमुपलभामहे, यथा पाञ्चदश्यस्य प्रकरणम् । तस्मादेतत्पाञ्चदश्यं सामिधेनीनां दर्शपूर्णमासयोश्च वाक्यप्रकरणाभ्यामवधार्यते । साप्तदश्यं तु केवलं

---

१ एवंजातीयकं विरोधि स्यादिति पा०। २ नवम इति—नवमाध्यायाद्याधिकरण ऊहापोद्घातविचारावसर इति शेष.।

णेनाऽऽध्वर्यवेषु, यो होता सोऽध्वर्युरिति । एवं प्रत्यक्षमध्वर्योः कार्ये घोद्यते । प्रत्यक्षं चानुमानाद्बलीयः । तस्मादाध्वर्यवं करणं परिवीरसीति होता कुर्यात् । अथ हौत्रं विरुद्धं कः कुर्यात् । इतरमन्यस्तेषां यतो विशेषः स्यात् । अन्यो होतृपुरुष एव स्यात् । यस्याव्यापृतता, प्राधान्यविशेषो वा ॥ २१ ॥

---

प्राकृतकाल बाधमानौ मन्त्रौ स्वकार्यान्न प्रच्यवेयाताम् । तयोस्तु य एव कालान्तरे प्रयुक्तः स एव स्वसामर्थ्यप्रतिपाद्यादर्थात्प्रच्यवते । सोऽय लिङ्गविरोध आपद्यते । ननु च 'यो होता सोऽध्वर्युः'[1] इत्यनया श्रुत्या लिङ्ग बाध्येत । बाध्येत, यदि श्रुतिः स्यात् । वाक्य त्विदं, तदपि लक्षणया । न ह्यत्र कस्यचिच्छब्दस्य श्रवणादिद् गम्यते हौत्राध्वर्यवे समानकर्तृके इति । किं तर्हि । होत्रध्वर्युशब्दसामानाधिकरण्यात् । सर्वत्र चैष संबन्धो वाक्यलक्षण इत्युक्तम्[2] । तत्रापि चाध्वर्युशब्दस्य कर्मलक्षणार्थत्वाद्विप्रकृष्टता । ननु लिङ्गमप्येतच्चोदकापेक्षित्वाद्विप्रकृष्टतरं भवेत् । वाक्यं ह्यर्थविप्रकर्षाल्लिङ्गेन बाध्येत । स चेह विपरीतोऽर्थविप्रकर्ष । न हिं चोदकेनाप्राप्तयोर्मन्त्रयोरेककालप्रयोज्यत्वं गम्यते । तस्मादेककर्तृत्वमेव बलीय इति । उच्यते । सत्यमिह चोदकाङ्गीकरण, तत्तु मन्त्रस्वरूपे न लिङ्गे । द्वयोरपि च तदविशिष्ट, प्राप्ते तु मन्त्रद्वये लिङ्गमौपदेशिकेनाविशिष्टम् । स्यादेतदेव यदि चोदक प्रापयेत् । स तु प्रत्यक्षवाक्यशिष्टसमानकर्तृत्वविरोधिमन्त्रद्वयं प्रापयितुमेव न शक्ष्यति । यद्यपि हि वाक्यं लिङ्गस्य नेष्ट, चोदकस्य तु स्वरूपप्रापणे पश्चाद्भाविनमपि विरोधमालोच्य शक्तं निरोद्धं कर्तुम् । ततश्छिन्नमूलत्वाल्लिङ्गस्य दुर्बलतेति । उच्यते । सर्वं हि विरोधवेलाया बाध्यते । न चानवगतो विरोधो बाधकारणं भवितुमर्हति । तदिह चोदकप्राप्तिवेलाया न कश्चिदपि विरोधो लक्ष्यते । यस्तु प्राप्ते विरोधस्तत्र लिङ्गं बलवत्तरमित्युक्तमेव । यदि चात्र द्वयोरपि समानकर्तृत्वं वाक्येन विधीयेत ततोऽप्येतस्य बलीयस्त्वमुद्भाव्येत । इह त्वाध्वर्यवस्य होत्रा सह संबन्धो विधीयते । न हौत्रस्यापि । स हि चोदकेन प्राप्नोति । तेन यदि प्रत्यक्षत्वादेतस्य बाधकत्वं ततः समाख्याकृतमेव क्रियमाणानुवादिनो होतृसंबन्धबाधनम् । एवं च सति लिङ्गवाक्ययोरविरोधान्न किंचिदपि बाधिष्यते । आध्वर्यवप्रयोगश्च सेत्स्यति । यथा तु लिङ्गबलीयस्त्वमाश्रितमासीत्तथाऽन्यदेवानिष्टमापद्येत । यो ह्यस्य वाक्यस्य विषयः स बाध्येत । न चास्य होतृहौत्रसबन्धो विषयः । कस्तर्हि । होत्राध्वर्यवसंबन्धः । ततश्च

---

१ श्रुत्या—सामानाधिकरण्यात्मिकया श्रुत्येत्यर्थ । २ ( अ० ३ पा० १ अ० ६ ) इत्यत्रेति शेष. ।

**[ ११ ] प्रैषेषु च पराधिकारात् ॥ २२ ॥** सि०

स्तो दर्शपूर्णमासौ । तत्र प्रैषाः समाम्नाताः । प्रोक्षणीरासादय, इध्माबर्हिरुपसादय, स्रुवं च स्रुचश्च संमृड्ढि, पत्नीं संनह्याऽऽज्येनोदेहीति । तत्र संदेहः । किं य एव प्रैषे, स एव प्रैषार्थे, उतान्यश्च प्रैषेऽन्यश्च प्रैषार्थे, इति । किं प्राप्तम् । एक एव प्रैषप्रैषार्थयोरिति । कुतः । समाख्यानात् । अन्य इति चाश्रुतत्वात् । नन्वात्मनः प्रैषो विप्रतिषिध्यते । उच्यते । न प्रैषो भविष्यति । प्राप्तकाले लोटं वक्ष्यामः । आह । प्राप्तकालेऽपि सति युष्मदादिष्वेवोपपदेषु मध्यमादयो व्यवस्थिताः । न पुरुषसंकरो भवति । उच्यते । सत्यां विवक्षायां युष्मदादिषु मध्यमादयः । यदा तव प्राप्तः काल इति विवक्ष्यते, तदा युष्मद्येव मध्यमो नास्मदि शेषे वा । यदा खलु क्रियायाः प्राप्त काल इत्येतावद्विवक्ष्यते, न तव मम वेति, न तदा युष्मदादीनामनुरोधेन मध्यमादयो भवितुमर्हन्ति ।

---

यथाप्रकृत्येव प्रयोगः स्यात् । तस्मात्समाख्यावलसमवाऽऽतिदेशिकं संबन्धं बाधित्वा समवायविशेषात्करणः प्रयोक्तव्य इति सिद्धम् ॥ २१ ॥

( इति—होतृ. करणमन्त्रानुष्ठातृत्वाधिकरणम् ॥ १० ॥ )

---

प्रैषस्य प्रैषार्थस्य चाऽऽध्वर्यवसमाख्यातुल्यत्वादध्वर्युप्रयोज्यत्वेऽवधारिते कथमात्मनः प्रैष इति चेदाह—नैवाय प्रैषः । किं तर्हि । प्राप्तकालताया लोटं वक्ष्याम इति । प्रैषवादी त्वाह—प्रत्यगात्मविषया चेत्प्राप्तकालता विवक्षिता हन्तोत्तमपुरुषेण भवितव्यम् । न हि परविषययुष्मदर्थमन्तरेण मध्यमपुरुषो लभ्यते । प्रैषे तु स्वभावतः परविषयत्वात्सुलभ इति । परस्त्वाह—यदा समाख्यावगतात्समानकर्तृत्वात्प्रैषबुद्धिरपनीता तदा प्राप्तकालत्वमभिधी[illegible] किं क्रियाणामभिधीयतामुत कर्तृणामिति क्रियाणामित्येव गम्यते । ता हि चोदिता[illegible] प्रथमतर प्रतीताः । तासां चानुष्ठानार्थं प्राप्तकालत्वस्मरणं दृष्ट[illegible] सर्वं विपरीतम् । आख्यातेषु च प्रथमादेः पुरुषस्य क[illegible]यक्कृत एव मध्यमपुरुषो भविष्यति । क्रियैव चोच्यते तव प्राप्तकाल इति । यदि च कर्तुः प्राप्तकालत्वमुच्येत ततः किं कर्तुमिति साकाङ्क्षमेव स्यात्, अथ प्रोक्षण्यासादनादि कर्तुमिति[2], तथा विशिष्टार्थप्रैष.

---

१ आध्वर्यवे करणमन्त्रे होत्रा क्रियमाणे तद्विरुद्धं क्रियमाणानुवादिनं च प्रयुञ्जीयादिति शङ्कायां होतृपुरुषेषु य एव कक्षनान्तरङ्गोऽध्र्यादि, तस्य वा कार्यान्तरव्यापृतत्वे बहिरङ्गो वा तृतीयादिः प्रयुञ्जीयादित्येवं समाधानार्थस्य 'इतरन्मन्यस्तेषां यतो विशेषः स्यात्' इत्युत्तरसूत्रावयवस्य व्याख्यार्थं 'अथ हौत्रं विरुद्धं कं कुर्यात्' इत्यादिभाष्यं वार्तिककारैरुपेक्षितम् । तदुपेक्षानिदानं तु कुण्डपायिनामयने होतृपुरुषाणां मैत्रावरुणाच्छावाकग्रावस्तुतामन्तानां त्रयाणामपि वचनात्कार्यान्तरव्यापृतत्वेन तादृशपुरुषाभावात्प्रकृतोदाहरणानुपयोगरूपं द्रष्टव्यम् । २ इतीति—अध्याह्रियत इति शेषपूरणम् ।

न चेदं युगपद्विवक्षितुं शक्यते। पदार्थस्य प्राप्तः कालः, तव चेति। भिद्येत हि तथा वाक्यम्। तेन यदि वा निर्ज्ञाते पदार्थकाले तव काल इति शक्यते वदितुं, यदि वा तवेति निर्ज्ञाते पदार्थस्य काल इति। तत्र पदार्थस्य कालो वदितव्यो न तु युष्मदर्थस्य। तेन हि स्मृतेन प्रयोजनम्। स हि कर्तव्य इत्यवगतो न तु युष्मदर्थस्तथा। तस्मात्समाख्यानादध्वर्योरेव प्रैषप्रैषार्थाविति प्राप्ते, ब्रूमः। प्रैषेष्वन्योऽन्यस्तदर्थेष्विति। कुतः। पराधिकारात्। परस्मिन् हि प्रैषे, उपपद्यते, नाऽऽत्मनीति। आह। नन्वक्तं प्राप्तकाले भविष्यतीति। उच्यते। न संभवति प्रैषे प्राप्तकालता न्याय्या। तस्माद्युष्मदर्थो गम्यमानो न विवक्षित इत्युच्यते, संभवति चात्र प्रैषार्थः। तस्मात्प्रैषः। प्रैषश्चेदन्यः प्रैषार्थ इति सिद्धम्॥ २२॥

णाद्वाक्यभेदः[1] स्यात्। तस्मादपि क्रियायाः प्राप्तकालत्वं प्रकाश्यते। अथापि प्रैषोऽसमाश्रीयते तथाऽप्यात्मानमेव कथंचिच्छरीरशरीरिणोरवस्थान्तराणां वा भेदेन प्रैषकं प्रैष्यं च व्यपदेक्ष्यतीति समानकर्तृकत्वे प्राप्ते, ब्रूमः। प्रैषेषु चेतरमन्यः कुर्यादिति संबन्धः। कुतः। स्वभावेनैव तेषां परविषयत्वात्परिक्रयवत्। यत्तु नैवाय प्रैष इति। तदयुक्तम्। मन्त्ररूपादेव प्रैषप्रत्ययोत्पत्तेः। यो हि समानकर्तृकतया त बाधते तेन समाख्यया लिङ्गं बाधितं स्यात्। न च प्राप्तकालतया लिङ्गविरोधः परिह्रियते। मध्यमपुरुषार्थस्यासंपादनात्। न च शब्दान्तरेणानुपात्ता क्रियैव शक्यते वक्तुं तव प्राप्तः काल इति। यद्यपि च शक्यते तथाऽपि न दृष्टः कश्चिदर्थः स्यात्, चेतनविषयत्वाददृष्टस्य प्रयोगस्य। तथाऽऽत्मभेदपरिकल्पनायामपि नैव दृष्टं प्रयोजनं, गौणताऽत्र स्थितैव। मुख्यं च कार्यं मन्त्राणामित्यवधारितम्[2]। ततश्च यद्यपि प्राप्तकालतायामेव चोद्, तथाऽपि परस्यैव सा कथ्यत इति न पराधिकारो निवर्तते। न च वाक्यभेदो विशिष्टार्थप्रेषणात्, अवश्यं चात्र विशिष्टताऽभ्युपगन्तव्या, प्रोक्षणीपदोपादानात्। न चैकपदोपात्तोऽनेकोऽर्थो वाक्यं भिनत्ति। सर्वाख्यातेषु क्रियाकर्तृसंख्योपग्रहपुरुषविशेषभावनानां युगपदुपादानस्यापरिहार्यत्वात्। न चेदृशं विशिष्टविधानं क्वचिन्नाभ्युपगन्तव्यम्। प्राप्तकालत्वे च क्रियायुष्मदर्थयोः पृथक्त्वाद्भेदेन शक्तिः कल्प्येत। प्रैषे तु तस्य नित्यमेव युष्मदर्थविषयत्वान्मध्यमपुरुषोऽनुवादः। एवं चैषा[3] समाख्याऽनुगृह्यते। तस्माल्लिङ्गेन समाख्याबाधादन्यः प्रैषोऽन्यश्च प्रैषार्थ इति॥ २२॥

( इति—प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वाधिकरणम्॥ ११॥ )

---

१ वाक्यभेद इति—कर्तृक्रियाविशिष्टकालप्राप्तत्वोक्त्या गौरवलक्षणवाक्यभेदः स्यादित्यर्थः। २ ( अ० १ पा० २ अ० १ ) इत्यत्रेति शेषः। ३ एषा समाख्या—प्रैषसमाख्येत्यर्थः।

## [ १२ ] अध्वर्युस्तु दर्शनात् ॥ २३ ॥ पू०

अथैवं गते, इदं संदिह्यते । किमध्वर्युरग्नीधं प्रेष्येदुताग्नीदध्वर्युमिति । अनियमोऽविशेषादिति प्राप्ते, ब्रूमः । अध्वर्युरुक्तप्रैषार्थकारी स्यात् । कुतः । दर्शनात् । दर्शनं भवति, तिर्यञ्चं स्फ्यं धारयेत्, यदन्वञ्चं धारयेद्वज्रो वै स्फ्यो वज्रेणाध्वर्युं क्षिण्वीतेति । यः प्रेष्यति तस्य हस्ते स्फ्यः । स्फ्येनाध्वर्युं क्षिण्वीतेत्यन्यमध्वर्युं प्रेषकं दर्शयति । तस्मादग्नीदध्वर्युं प्रेष्येदिति ॥ २३ ॥

## गौणो वा कर्मसामान्यात् ॥ २४ ॥ सि०

नैतदस्ति, अग्नीधः प्रैषोऽध्वर्योः प्रैषार्थ इति । किं खलु, अध्वर्युरेवाग्नीधं प्रेष्येत् । एवमध्वर्युणा प्रैषः प्रैषार्थश्चोभावपि कृतौ भविष्यतः । तत्राऽऽध्वर्यवमिति समाख्याऽनुग्रहीष्यते । तस्मादध्वर्युरेव मुख्यः स्यात् । किमस्य मुख्यत्वम् । यदनेन सर्वं कर्तव्यं समाख्यानादिति । अथ यदुक्तमध्वर्युः प्रचरिता दृश्यत इति । तदुच्यते । सत्यं दृश्यते । न त्वस्य प्रैषार्थकरणे प्रमाणमस्ति चिन्त्यमानम् । तस्मादेतन्मिथ्यादर्शनम् । यस्य हि दर्शनस्य प्रमाणं नास्ति, व्यामोहः सः । यथा शुक्तिकायां रजतविज्ञानम् । अस्ति त्वग्नीधः प्रैषार्थकरणे प्रमाणम् । तस्मादाग्नीध्रः प्रचरिता प्रचरितरि चाध्वर्युशब्दो दृश्यते । तस्माद्गौणः, आध्वर्यवं वेदे समाम्नातान्पदार्थान्करोतीति कृत्वाऽध्वर्युरित्युच्यते

'यदन्वञ्चं धारयेद्वज्रं । वज्रेण क्षिण्वीत' वज्रोऽध्वर्युं क्षिण्वीतेति वा पाठः । स्फ्यस्य धारणं तावदग्नीध एकान्तेन । स चाध्वर्युं क्षिण्वीतेति वदन्नग्नीधं स्फ्यवन्तं प्रेषकं दर्शयति । का त्वस्य प्राप्तिः । उच्यते । 'अङ्गगुणविरोधे च तादर्थ्यात्' इत्यनेनाङ्गत्वात्प्रैषस्य कर्तृलोपो युक्तो न प्रधानस्य । बहवश्च प्रैषार्था एको निगदः । तेन 'भूयसां स्यात्सधर्मत्वम्' इत्यपि प्रैषार्थेऽध्वर्युरिति परिशेषात्प्रैषेऽग्नीत ॥ २३ ॥

'मुख्यं वा पूर्वचोदनात्' इति प्राथम्यात्प्रैषे समाख्यातः कर्ता युक्तः । न हि तदानीं विरोधः कश्चिदस्ति । तस्मिंस्तु प्रयुक्ते विरोधात्प्रैषार्थेऽन्यो भवति । प्रयोजकस्य च प्रयोज्यव्यापारेऽपि कर्तृत्वं न विहन्यत इत्युभयानुग्रहः । इतरथा हि प्रैषेऽत्यन्तबाध एव स्यात् । न हि स तेन कृतो नापि कारितो भवेत् । तस्मादध्वर्युप्रेषितोऽग्नीत्कुर्यादिति । 'वज्रेणाध्वर्युम्' इति चाऽऽग्नीध्रमेव तत्कार्यापत्तेरभिधास्यति ॥२४॥

( इति—प्रैषस्याऽऽध्वर्यवत्वाधिकरणम् ॥ १२ ॥ )

---

१ ( अ० १२ पा० २ अ० ९ सू० २७ ) । २ ( अ० १२ पा० २ अ० ७ सू० २४ ) एतत्सूत्रावयवः । ३ ( अ० १२ पा० २ अ० ८ सू० २५ ) ।

आग्नीध्र इति । तस्मादाध्वर्यवः प्रैषः आग्नीध्रः प्रैषार्थ इति ॥ २४ ॥

## [ १३ ] ऋत्विक्फलं करणेष्वर्थवत्त्वात् ॥ २५ ॥ पू०

दर्शपूर्णमासयोरामनन्ति, ममाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं परिगृह्णाति, इति । तत्र संदेहः, किमृत्विक्फलमाशासितव्यम्, अग्ने वर्चो विहवेष्वस्त्विति, उत यजमानस्येति । किं प्राप्तम् । अध्वर्योरेवेति । कुतः । एवं श्रुतिरादृता भविष्यति । इतरथा लक्षणा स्यात् । आत्मना यजमानं लक्षयेत् । तस्मादृत्विक्फलमाशासितव्यमिति । कोऽर्थः । अनया समिधा धार्यमाणेऽग्नौ यागः संभविष्यति । तत्र विहवेषु—स्पर्धास्थानेषु, अहं वर्चस्वी भविष्यामीत्यध्वर्योर्वचनम् । एवमुत्साही भविष्यतीति ॥ २५ ॥

## स्वामिनो वा तदर्थत्वात् ॥ २६ ॥ सि०

यजमानस्य वा वचनं, तदर्थत्वात्कर्मणः । यजमानार्थं हीदं कर्म साङ्गम् । उपग्रहविशेषात् । साङ्गस्यास्य प्रयोजनं यजमानस्य फलनिष्पत्तिर्नाध्वर्योः सुप्रचारितुमपि यशः । किमतो यद्येवं, फलसं-

---

यथैवाकरणेषु यत्फलं तत्प्रकरणस्थं कीर्त्यते नान्यत्कल्प्यते तथा 'ममाग्ने वर्चो विहवेष्वस्तु' इत्यादिष्वपि । ते तु यजमानेनैव प्रयुज्यन्ते तस्यैव च फलमित्यविरुद्धाः । करणाः पुनरेकान्तेन कर्मसमानकर्तृकत्वादाध्वर्यवाः । तैर्यद्यध्वर्युणा प्रयुज्यमानैर्यजमानस्य फलमभिधीयेत ततो ममेत्यभिधानं विरुध्येत । कीदृशं त्वध्वर्योः फलमनूद्यत इति, तद्भावभावित्वमात्रेण सुप्रचरितृत्वयशः । तच्च तस्योत्साहं करिष्यतीति निरूपयति ॥ २६ ॥

नैवेदमकरणवदुत्साहार्थं फलं संकीर्त्यते । किं तर्हि । मन्त्रवर्णाश्रित्यादृष्टमाश्रयं फलमवकल्पते । कथम् । व्यतिरिक्तक्रियासाधनत्वेन हि मन्त्रश्चोदितस्ता वा तत्संबन्धि वा किंचित्प्रकाशयन्नङ्गभावं गच्छति । तस्मादिह यद्यध्वर्युयशः संकीर्त्यते नैतेन सकलेन मन्त्रेणाभ्यन्वाधानं साधितं स्यात् । न हि तत्प्रकाशनमभ्यन्वाधानेना-

---

१ अकरणवदिति—'आयुर्दा अग्ने अगन्म सुवः सुवरगन्म' इत्यादयो ये, इतिकरणाद्यविनियुक्ता मन्त्रास्तद्वदित्यर्थः । २ व्यतिरिक्तेति—स्वशक्त्या प्रकाश्यार्थव्यतिरिक्ताभ्यन्वाधानाद्यक्रियासाधनत्वेनेत्यर्थः ।

कीर्तनात्फलकर्तव्यता गम्यते। तदेतदग्न्यन्वाधानं यजमानस्य फल-संकीर्तने क्रियमाणेऽनेन मन्त्रेण फलसंबन्धात्प्रकाशितं कृतं भवति, नाध्वर्युयशःकीर्तनेन। तस्माद्यजमानफलमाशासितव्यमिति। अथ कस्मान्न याजमान एष मन्त्रो भवतीति। उच्यते। अग्न्यन्वाधानं समाख्ययाऽऽध्वर्यवम्। तत्रैवंगुणो मन्त्रः करोत्याध्वर्यवः। स उच्यतेऽनेन मन्त्रेणेति। तस्मादाध्वर्यवो मन्त्रः। मम वर्चोऽस्त्वित्यपि यजमानस्य वर्चो ममेति व्यपदिशति लक्षणया। यथा राजनि जयं वर्तमानं सैनिका अस्माकमिति व्यपदिशन्त्येवम्॥ २६॥

---

पेक्षितम्। यद्यपि तावत्प्रधानफलं प्रकाशयेन्थाऽपि न संबध्येत किमुत कर्मकालानौपयिकानुनिष्पादिबाह्यऋत्विग्यश प्रकाशनेन। तस्मात्सूक्तवाकन्यायेनैव चोदितमन्त्रकरणत्वान्यथानुपपत्त्याऽग्न्यन्वाधानस्य फलमेतत्कल्प्यते। याम्त्वाशिषस्ता साक्षात्प्रधानाङ्गमिति तत्फलप्रकाशनेनैवाङ्ग भवन्ति। यदि पृथक्फलं साधयेयुस्तत. संयुक्तत्वान्नैव प्रकरणेन क्रत्वङ्गभावं गच्छेयुरिति वैषम्यम्। आह। सत्यपि पृथक्फलत्वे ममशब्देनाध्वर्युर्गृह्यत इति व्यपदेशन्यायेनाऽऽध्वर्यवमेव प्राप्नोति। उच्यते। लिङ्गेनाऽऽध्वर्यवत्वं प्राप्नोत्यात्मनेपदश्रुत्या याजमानत्वम्। अथोभयानुग्रहार्थं कस्मात्कर्मापि याजमानमेव न भवति। तथा सति हि ममशब्द आत्मनेपदं चोभयमपि न विरोत्स्यत इति। नैतदस्ति। यदि ह्येतन्मन्त्रपूर्वकं कर्म भवेत्तत एवं नियम्येत। प्रथमं त्वेतदुत्पद्यमानं केवलक्रत्वर्थत्वप्रतीतेरविरुद्धाध्वर्युसंबन्धं समाख्यानात्प्रतिपद्यते। मन्त्रमात्रं याजमानमिति चेन्न। कर्मणाऽऽकृष्यमाणस्य तत्समानकर्तृकत्वनियमात्। फलमपि तद्वाकृष्येत। आकृष्येत, यद्यात्मनेपदेन न प्रतिबध्येत। तत्राऽऽत्मनेपदस्य बाधासंभवाद्गौणत्वप्रकारानुपपत्तेश्च मन्त्रगत एव ममशब्दोऽध्याहारेण वा पूर्यते गौणो वा भवति, मदीयस्य यजमानस्य मद्रूपस्यैव वा यजमानस्य वर्चो विहवेष्वस्त्विति। तस्माद्यजमानफलमेतदिति। ये च यजमानकर्तृकमेवाग्न्यन्वाधानं पक्षे वदन्ति तेषामित एव मन्त्रवर्णाद्भ्रान्तिः। अथ तु किंचिद्वचनमुपन्यस्यन्ति तथाऽपि किं कर्मविकल्पवत्फलमध्वर्युयजमानयोर्विकल्पते किं वा फलं नित्यमेव याजमानमिति विचारः॥ २६॥

---

१ तत्रैष गुणो मन्त्रो य. करोत्याध्वर्यवं स उच्यतेऽनेन मन्त्रेणेति पा०। २ (अ० ३ पा० २ अ० ५) अत्रत्येनेति शेष.। ३ सयुक्तत्वादिति–'असंयुक्त प्रकरणादितिकर्तव्यतार्थित्वात्' इति प्रकरणाधिकरणोक्तन्यायेन लिङ्गादिविनियुक्तेषु प्रकरणाविनियोज्यत्वासंभवादित्याशय। ४ (अ० ३ पा० ८ अ ५ सू० १४) अत्रत्येनेति शेषः। ५ ये च—कल्पसूत्रकारा इत्यर्थ.।

लिङ्गदर्शनाच्च ॥ २७ ॥

लिङ्गमप्यमुमर्थं दर्शयति । एवं ह्याह । यां वै कांचन ऋत्विज आशिषमाशासते यजमानस्यैव सा, इत्याशिषो यजमानार्थकतां दर्शयति । तस्मादपि ब्रूमो यजमानफलमाशासितव्यमिति । पक्षोक्तमेव प्रयोजनमिति ॥ २७ ॥

[ १४ ] कर्मार्थं तु फलं तेषां स्वामिनं प्रत्यर्थवत्त्वात् ॥२८॥ सि०

इदं समधिगतं, करणेषु मन्त्रेषु स्वामिनः फलमाशासितव्यमिति । किमेष एवोत्सर्गः । नेत्याह । क्वचिदृत्विजामपि फलमाशासितव्यमिति, यत्र कर्मार्थं फलम् । यथा, अग्नाविष्णू मा वामवक्रमिषं विजिहाथां मा मा संताप्तम्, इति । असंतप्तोऽध्वर्युः कर्म शक्नोति कर्तुम् । कर्मसिद्धिर्यजमानस्योपकारिकेति, ऋत्विक्फलमाशासितव्यमत्रेति ॥ २८ ॥

व्यपदेशाच्च ॥ २९ ॥

यत्र च व्यपदेशो भवति, तत्राऽऽर्त्विजम् । दक्षिणस्य हविर्धानस्याधस्ताच्चत्वार उपरवाः प्रादेशमुखाः प्रादेशान्तरालाः । तत्र हस्तौ प्रवेश्याध्वर्युर्यजमानमाह, किमत्रेति । स आह, भद्रमिति । तन्नौ सहेत्यध्वर्युः प्रत्याहेति व्यपदेशो भवत्यध्वर्योर्यजमानस्य च । तन्नौ सहेत्युभयोर्वचनमध्वर्युयजमानयोः । तस्मादध्वर्युफलमाशासितव्यमत्रेति ॥ २९ ॥

सर्वाशिषामृत्विक्प्रयोज्यानां यजमानसंबन्धानुवाद एवमवकल्पिष्यते ॥ २७ ॥

( इति-करणमन्त्रप्रकाश्यफलस्य याजमानत्वाधिकरणम् ॥ १३ ॥ )

---

स्वत्वसंतापादि फलं कर्मप्रयोग एवोपयुज्यते तद्यजमानेनापि तथेष्यत एवेति नाऽऽत्मनेपदेन विरुध्यते ॥ २८ ॥

'व्यपदेशादितरेषाम्' इत्यत्र ब्राह्मणगतमुदाहृतमिह तु प्रस्तावशेन मन्त्रगतम् । तद्धि क्लेशेन कल्प्यमानं कदाचिदुभयोर्न शक्यते कल्पयितुमित्याशङ्का स्यात् । कल्पनाहेतुस्तु युगपत्प्रवृत्तेरविशिष्ट इति न किंचिद्गौरवम् । अथ कस्मात्तावुभावेव प्रयुञ्जाते । यद्येकेनापि प्रयुज्यमानं शक्नोत्येवोभयगामि फलं प्रकाशयितुं तदा सिद्धेऽर्थे न किंचिदुभयकर्तृकत्वेन प्रयोजनमस्तीत्यध्वर्युनियमः ॥ २९ ॥

(इति—करणमन्त्रेषु कर्मोपयोगिप्रकाश्यमानफलस्य ऋत्विग्गामित्वाधिकरणम् ॥ १४ ॥)

---

१ अत्रेति क्वचिन्नास्ति । २ ( अ० ३ पा० ८ अ० ५ सू० १४ ) अत्रत्यन्यायेन पौनरुक्त्यं तावत्परिहरति—व्यपदेशादित्यादिना ।

[१५] द्रव्यसंस्कारः प्रकरणाविशेषात्सर्वकर्मणाम् ॥ ३० ॥ सि०

दर्शपूर्णमासयोर्बर्हिर्धर्मा वेदिधर्माश्च । तेषु संदेहः । किमङ्गप्रधानार्था उत प्रधानार्था इति । प्रकरणात्प्रधानार्था इति प्राप्त उच्यते । नैवं, द्रव्यसंस्कारोऽङ्गप्रधानार्थो यथा व्याख्यातमेवोत्तरविवक्षया प्राप्तिरेषा क्रियत इति ॥ ३० ॥

[१६] निर्देशात्तु विकृतावपूर्वस्यानधिकारः ॥ ३१ ॥ सि०

ज्योतिष्टोमे पशुरग्नीषोमीयो यो दीक्षितो यदग्नीषोमीयं पशुमालभते, इति । तत्र श्रूयते । बर्हिषा यूपावटमवस्तृणाति, आज्येन यूपमनक्ति, इति । तत्र संशयः । किं तयोराज्यबर्हिषोराज्यबर्हिर्धर्माः प्राकृताः कर्तव्या उत नेति । किं प्राप्तम् । कर्तव्या इति । कुतः । वाक्यं हि बर्हिर्मात्रस्याऽऽज्यमात्रस्य च धर्माणां विधायकम् । तदिहापि वाक्यं चोदकेन प्राप्तम् । न चैतद्बर्हिराज्यं निष्प्रयोजनम् । तस्मादत्र धर्माः क्रियेरन्निति । एवं प्राप्ते ब्रूमः । निर्देशाद्विकृतावपूर्वस्यानधिकारः । निर्दिष्टा एते धर्माः प्रकृतौ । यत्र प्रधानस्योपकुर्वन्ति प्राकृतकार्ययोराज्यबर्हिषोः । ये च प्रधानस्योपकारिणो धर्मास्त इहातिदिश्यन्ते । प्रधानं हि चोदकोऽपेक्षते, न धर्मान् । प्रधानस्य हि चोदकेन सामान्यं[१], न धर्माणाम् । अपि च । नान्यार्थे

---

गत समाख्याविरोधाविरोधविषय. । सर्वश्च श्रुत्यादिविरोधाविरोधविचारः प्रकृताविव विकृतिष्वपि द्रष्टव्य. । यत्तु धर्माणा सामानाधिकरण्यमङ्गप्रधानेषु पूर्वोक्त तद्विकृतिषु कथमिति विचारे प्राप्ते सूत्रमेतत् । शक्यं[४] तु पूर्वपक्षेऽप्येतत्समर्थयितुं यस्मात्प्रकृतौ बर्हिरादिसंस्कारः सर्वकर्मणा तस्माद्विकृतावपि तथैव स्यादिति ॥ ३० ॥

( इति–द्रव्यसंस्काराणामङ्गप्रधानार्थताधिकरणम् ॥ १९ ॥ )

---

यद्यपि[५] यमङ्गोपदेश एवानुषङ्गरूपेण साधारणः स्यात्, यदि च शास्त्राण्यतिदिश्येरंस्ततः शास्त्रार्थ. प्रकृतिवद्विकृतिष्वपि कल्प्यमान. सर्वार्थत्वेनावधार्यते कार्यप्राप्तिपुरःसरस्तु

---

१ सामान्यं—सादृश्यमित्यर्थ । २ नान्यार्थे ज्ञाते, इति पा० । ३ ( अ० ३ पा० ७ अ० १ सू० २ ) इत्यत्रेति शेष । ४ एवं तावद्यथाभाष्य सूत्र प्राप्तिसूत्रतया व्याख्यायाधुनोत्तराधिकरणपूर्वपक्षपरतयाऽपि योजयति—शक्यमित्यादिना । ५ ' ये च प्रधानस्य ' इत्यादि सिद्धान्तभाष्यं तात्पर्यतो व्याचष्टे–यद्यपीत्यादिना।

इति ज्ञातेन संनिहितेनाप्येकवाक्यता भवति, अन्यसंबन्धोपपत्तौ सत्याम्। यथा भार्या राज्ञः, पुरुषो देवदत्तस्येति। किमङ्ग पुनर्विप्रकृष्टेन, निर्ज्ञातं खल्वङ्गत्वं प्रधानापेक्षायां भवति। केवलमिहातिदेशः क्रियते। पदार्थापेक्षायामङ्गत्वमपि साधयितव्यं स्यात्। धर्माश्चापेक्ष्यमाणाः साधारणा भवेयुः। तथोहो नावकल्पेत। लिङ्गविशेषदर्शनाच्च व्यवतिष्ठेरन् धर्माः। तत्र दर्शनं नोपपद्येत। वपया प्रातः सवने चरन्ति, पुरोडाशेन माध्यंदिने, इति। तथा, न पिता वर्धते, न माता, न नाभिः, प्राणो हि स इति। तस्माद्यद्द्वारा प्रकृतौ कृताः, तद्द्वारैव विकृतौ, नान्यद्द्वारा। न च यूपावटस्तरणं प्रकृतावस्ति यूपाञ्जनं वा। तस्मान्न तत्र प्राकृता धर्मा भवेयुरपूर्वत्वात् ॥ ३१ ॥

[१७] विरोधे च श्रुतिविशेषादव्यक्तः शेषे । ३२ ॥ सि०

दर्शपूर्णमासयोरामनन्ति, समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति। तथा, अरत्निमात्रे विधृती करोति, इति। तत्र संशयः। किं वेदिस्तरणार्थाद्बर्हिषो विधृती पवित्रे, उतान्यत इति। किं तावत्प्रा-

धर्मातिदेश इष्टः[1]। तत्र यागगतेन व्यापारेण गृहीतेनाऽऽत्मसिद्ध्यर्थं नियमादृष्टद्वारभूतानि दृष्टान्यदृष्टानि च प्रयोजनानि गृह्यन्ते। तानि च निर्ज्ञातपरिमाणान्येव प्राप्नुवन्ति। तैश्चाऽऽत्मसिद्ध्यर्थं पदार्थाः प्राप्यमाणाः स्वात्मनियता एव प्राप्यन्ते। न च यूपावटास्तरणं नाम बर्हिषः कार्यं प्रकृतौ विज्ञातं, येन बर्हिस्तद्धर्मा वा गृह्येरन्। यैस्तु वेदिस्तरणादिभिर्गृह्यन्ते न तेषां यूपावटस्तरणमन्तरेण किंचिन्नोपपद्यत इति न तदर्थं प्राप्यन्ते। तस्मादिहापूर्वस्यानधिकार इति। प्रधानं हि चोदकोऽपेक्षत इत्यादिना[2], अपिना साधारण्यं शास्त्रातिदेशो[3] नेत्येतन्निराकरोति। शास्त्रापेक्षायां हि सर्वमभिनवं प्रकृतिवस्तुनः कल्पयितव्यं स्यात्। दूरस्थसंबन्धाविक्लेशश्च स्थित एव। शास्त्रातिदेशात्सामानविध्याच्च, पशुधर्माणां मध्येऽग्नीषोमसंस्कारार्थः पशुपुरोडाशो देवतान्तरे न प्राप्नोति। तस्योहस्य च दर्शनं विरुध्येत। तस्मादुपकारातिदेश इति ॥ ३१ ॥

( इति-प्राकृतधर्माणां विकृतावपूर्वपदार्थानङ्गत्वाधिकरणम् ॥ ११ ॥)

---

१ इष्ट इति—सप्तमाद्ये प्रकृतिविकृतिसाधारण्यनिरासेन, दशमाद्ये च कार्यप्राप्तिपुरःसरमतिदेशोऽभिप्रेत इत्यर्थः। २ प्रधानं हीत्यनेन शास्त्रातिदेशः, अपि चेत्यनेनोपदेशस्य प्रकृतिविकृतिसाधारण्यं च निरस्यन् इत्येव भाष्यमवयवशो व्याख्यास्यति—प्रधानं हीत्यादिना। ३ शास्त्रातिदेश इत्यारभ्य स्थित एवेत्यन्तो ग्रन्थो काशीमुद्रितपुस्तकेऽनुपलभ्यमानोऽपि व्याख्यानाद्यवलम्बनेन स्थापितः।

मम् । वेदिस्तरणार्थाद्बर्हिषः कार्ये । किं कारणम् । तद्धि प्रकृतं, धर्मा-श्चाविशेषात्सर्वबर्हिषामर्थेन । तस्मात्तत इति प्राप्ते । ब्रूमः । अन्यतः क्रियेत । कुतः । विरोधात् । कथं विरोधः । श्रूयते हि, त्रिधातु पञ्चधातु वा वेदिं स्तृणाति, इति । तद्येनाऽऽस्तीर्यते, कथं तद्विधृतिप वित्रं क्रियेत । न हि संभवत्येकं स्तरणाय विधृतिपवित्राय च । तदेत-दुपदिष्टवचनमनेकगुणत्वं चोभे अप्यसंभविनी प्रतिज्ञाते स्याताम् । तस्मान्न ततः क्रियेतेति । यदि न ततः, कुतस्तर्हि । अन्यत्र एवंजा-तीयकः शेषे । अस्ति तत्र परिभोजनीयं नाम बर्हिः, ततः कर्त-व्यम् ॥ ३२ ॥

[१८] अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् ॥ ३३ ॥ सि०

ज्योतिष्टोमे श्रूयते, पुरोडाशशकलमैन्द्रवायवस्य पात्रे निदधाति, धाना आश्विनपात्रे, पयस्या मैत्रावरुणपात्रे, इति । तत्र संशयः । किमन्यत एषा क्रियेत, उत प्रकृतेभ्य इति । किं प्राप्तम् । पूर्वेण न्यायेनान्यत इति । तत्रोच्यते । तत एकदेशस्यापनयः । कुतः । विद्य-मानसंयोगात् । विद्यते हि तत्र पुरोडाशो धानाः पयस्या च । तत्सं-योग एव न्याय्यो नान्यसंयोग इति । पुरोडाशादीनामेव संस्कारो, नैन्द्रवायवादीनाम् । कुतः । पुरोडाशादिषु द्वितीयादर्शनात् । प्रत्यक्ष-श्चैकदेशापनयेनोपकारो, नैन्द्रवायवादिसंबन्धेन । एवं प्रकृतानुग्रहो भविष्यति । तस्मात्प्रकृतस्योपदेशेन तत्क्रियेत । न चात्रोपदिष्टोपदेश

---

इदानीं प्रकृतावपि नातीव सर्वार्थतेत्येतत्साधयति । यथाऽऽलूनस्य बर्हिषस्त्रिधातु पञ्चधातु वेति सकलस्य स्तरणविधानादशक्योऽन्यविनियोग इति सामान्यभूतो विधृतिपवित्रार्थो दर्भविधिरन्यो द्रष्टव्यः । धातुरिति स्तरणचयोऽभिधीयते ॥ ३२ ॥

( इति—प्रकृतावपि लवनादेरसर्वार्थताधिकरणम् ॥ १७ )

---

पुरोडाशधानादीनां सवनीययागार्थत्वात्पूर्वेणैव न्यायेन प्रहणश्रयणार्थमन्ये पुरोडा-शशकलादय इति प्राप्तेऽभिधीयते । 'एकदेशद्रव्ये च' इत्यनेनाप्रयोजकलक्षणापत्ते-रन्यस्य च शकलस्याभावाद्‌द्व्यवदानमात्रे च हुते शेषस्य प्रतिपाद्यमानस्य दृष्टार्थत्वाद्-

---

१ स्तरणचय इति— स्तरणार्थबर्हिर्मुष्टिचयवत् इत्यर्थः । २ प्रहणे' इति पा० । ३ ( अ० ४ पा० १ अ० १३ सू० २८ )

आशङ्क्योऽनेकगुणभावश्च । अन्येन शकलेन होमोऽन्यश्च प्रति-पाद्यते ॥ ३३ ॥

[१९] विकृतौ सर्वार्थः शेषः प्रकृतिवत् ॥ ३४ ॥ पू०

इदमामनन्ति । यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्या इति । अत्र संशयः । किमङ्गप्रधानार्थमुपांशुत्वमुत प्रधानार्थमिति । किं प्राप्तम् । विकृतौ सर्वार्थः शेषः स्यात् । अविशेषादङ्गानां प्रधानानां च प्रकृति-वत् । यथा प्रकृतौ वेदिधर्मा आज्यधर्माश्चाङ्गप्रधानार्थाः, एवमत्रापि ॥ ३४ ॥

मुख्यार्थो वाऽङ्गस्याचोदितत्वात् ॥ ३५ ॥ सि०

प्रधानार्थो वा एष विकृतिषु स्यात् । एवमिदं सर्वार्थमुच्येत, प्रकरणं बाधित्वा वाक्येनाङ्गप्रधानार्थमिति । तदेवेदानीं वाक्यं विशे-षितं काम्या इष्टय इति । काम्याश्च प्रधानयागाः, अङ्गयागाः प्रधा-नार्थाः । तस्मादङ्गमचोदितम् । यत्कामेन फलवद्बोध्यते, तदेवानयो-पांशुत्वेतिकर्तव्यतयाऽनुबध्यते । तस्मात्प्रधानार्थमुपांशुत्वम् ॥ ३५ ॥

[२०] संनिधानविशेषादसंभवे तदङ्गानाम् ॥ ३६ ॥ सि०

श्येने श्रूयते, इतिनवनीतमाज्यमिति । तत्र संदेहः । किं नवनीतं प्रधानस्योताङ्गानामिति । किं प्राप्तम् । प्रधानस्य । तस्य हि प्रकरण

---

द्वितीयानिर्देशानुग्रहान्न कश्चिद्विरोधो दृश्यते । तस्मादत्र प्रकृतोपादानम् ॥ ३३ ॥

( इति—प्रकृतपुरोडाशादीनां निधानार्थताधिकरणम् ॥ १८ ॥ )

यत्र यत्र स्थितमुपांशुत्वं काम्यानामिष्टीनामुपकर्तुं शक्नोति तत्र तत्र कर्तव्यम् ॥ ३४ ॥

केचिदाहुरस्य प्रत्यक्षत्वेन प्रथमतरं प्राप्तेश्चोदकप्राप्याण्यङ्गानि न तावत्प्राप्नुवन्तीत्य-चोदितत्वम् । न त्वेतत्संभवति । सर्वत्र चोदकस्य प्रथमतरं प्रवृत्तेः । तस्मादयमर्थः । प्रकृतौ हि प्रकरणात्प्रधानार्थत्वे प्राप्ते वाक्यात्सर्वार्थत्वम् । इह तु वाक्यमेव विशेषनिष्ठं, काम्या इति वचनात् । न ह्यङ्गानि कामसंबद्धानि तस्मान्न तेषामेव धर्मश्चोदित इति ॥ ३५ ॥

( इति—उपांशुत्वस्य काम्येष्टिप्रधानमात्रार्थत्वाधिकरणम् ॥ १९ ॥ )

---

१ प्रतिपाद्यत इतीति क्वचित्पाठः ।

मिति वचनप्रामाण्यान्नवनीतेन प्रधानं निर्वर्तयितव्यमिति । एवं प्राप्ते ब्रूमः । असंभव एतस्मिंस्तदङ्गानां—श्येनाङ्गानां स्यात् । कथमसंभवः । सोमद्रव्यकत्वात्प्रधानस्य । ननु वचनान्नवनीतं भविष्यति । न श्येने नवनीतं भवतीत्येष वाक्यार्थः । कस्तर्हि । श्येने नवनीतमाज्यं भवतीति नवनीताज्यसंबन्धो विधीयते, श्येनाज्यसंबन्धोऽनूद्यते । न च साक्षाच्छ्येनस्याऽऽज्यसंबन्धोऽस्ति, श्येनाङ्गानां तु विद्यते । यस्यास्ति तस्यानूद्य नवनीतं विधीयते संनिधानविशेषात् ॥ ३६ ॥

आधानेऽपि तथेति चेत् ॥ ३७ ॥

एवं चेद्दृश्यते, श्येनाङ्गानां नवनीतमिति, आधानेऽपि पवमानेष्टिषु स्यात् । ता अपि हि श्येनस्योपकुर्वन्ति, तत्संस्कृतेऽग्नौ श्येनो निर्वर्तत इति ॥ ३७ ॥

नाप्रकरणत्वादङ्गस्य तन्निमित्तत्वात् ॥ ३८ ॥

न श्येनस्य प्रकरणे पवमानेष्टयोऽग्न्याधानं वा श्रूयते । किमतो यद्येवम् । आधानस्य च श्येनस्य च न कश्चिदस्ति संबन्धः, अग्नीनामाधानमग्नयश्च श्येनस्य । तस्मान्न पवमानहविःषु नवनीतम् । नैतच्छ्येनाङ्गत्वे निमित्तं, यदाधानमग्नीनामुपकरोति । यदि प्रकरणादीनामन्यतममस्ति, तन्निमित्तं भवेत् । तस्मान्न श्येनाग्न्याधानयोः संबन्धोऽस्तीति ॥ ३८ ॥

[२१] तत्काले वा लिङ्गदर्शनात् ॥ ३९ ॥ पू०

इदमिदानीं संदिह्यते, किं सुत्याकालानामङ्गानां नवनीतमुत सर्वे-

' दृतिनैवनीतमाज्यम् ' इति प्रकरणे विशिष्टविधानात्सोमो बाविष्यत इति मन्यते । यतस्त्वनेकार्थविध्यसंभवादाज्यमनूद्य विशेषमात्रं विधीयते । न च प्रधानस्याऽऽज्यप्राप्तिः । तस्मात् ' आनर्थक्यात्तदङ्गेषु ' इत्येव सिद्धम् ॥ ३६ ॥

अवश्यं श्येनोपकारि यदाज्यमिति वक्तव्यम् । ततश्च पवमानहविराज्यमपि श्येनोपकारीति दृतिनवनीतं स्यात् ॥ ३७ ॥

न ह्युपकारित्वमात्रेण सबन्धः । किं तर्हि । अधिकारात्प्रकृतस्योपकारिणः, प्राकरणिकं चोदकेन संनिहितं न पवमानेष्टिगतमिति व्यवस्था ॥ ३८ ॥

( इति–दृतिनवनीताज्यस्य श्येनप्रयोगान्तर्वर्त्याज्यकार्यार्थताधिकरणम् ॥२०॥)

१ दृतिनवनीतमाज्यमिति—चर्मभाण्डस्थितनवनीतप्रकृतिकमाज्यमित्यर्थः । २ ( अ० ३ पा० १ अ० ९ सू० १८ ) ।

षामिति । सुत्याकालानां स्यात् । लिङ्गदर्शनात् । इदं श्रूयते । सह पशूनालभते, इति । तत्र पुनर्वचनम्, अग्नीषोमीयस्य स्थानेऽग्नीषोमीयः पुरोडाशः, अनुबन्ध्यायाः स्थाने मैत्रावरुणी पयस्या, इति द्वे स्थाने शून्ये दर्शयति । तेनावगम्यते श्येनस्य वचनं सुत्याकालानामङ्गानां विशेषं विदधातीति ॥ ३९ ॥

**सर्वेषां वाऽविशेषात् ॥४०॥ सि०**

सर्वेषामेव चाङ्गानां नवनीतं स्यात् । कुतः । अविशेषात् । असति विशेषे सर्वेषामप्यङ्गानामिति ॥ ४० ॥

**न्यायोक्ते लिङ्गदर्शनम् ॥ ४१ ॥**

यदुक्तं लिङ्गं, तत्परिहरणीयम् । नास्ति तावत्प्रमाणं यच्छ्येनस्य वचनं तत्सुत्याकालानामङ्गानामिति । किंतु दर्शनम् । तदप्रमाणमूलत्वान्मिथ्यादर्शनं मृगतृष्णावत् । कथं तु मध्ये पशूनामालम्भ इति । न्यायात् । को न्यायः । क्रमानुग्रहः । एवं वचनवर्जितः क्रमोऽनुगृहीतो

---

संनिधिविशेषात्सामान्यतो दृष्टाच्च तत्कालाना लिङ्गदर्शनेन दृष्टान्तं साधयति । पशुसाहित्यं ह्येतदीयो धर्मः सुत्याकालो दृष्टोऽग्नीषोमीयानुबन्ध्यास्थानयोरन्येनानुग्रह. वचनात् । तस्मादयमप्येतद्धर्मत्वात्सुत्याकाल इति ॥ ३९ ॥

तदुक्तं ' सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात् '[1] इति ॥ ४० ॥

न्यायगम्ये लिङ्गमीदृशं साधक भवति । आगमगम्यस्त्वयम् । न च सहाऽऽलम्भस्यैतद्धर्मत्वात्सुत्याकालता । कि तर्हि । अन्यत एव न्यायात् । न चासौ दृतिनवनीते सभवति । तं न्याय दर्शयति । एवं वचनवर्जितो यः क्रमः—संनिकर्षलक्षणोऽनुमेयश्रुत्यर्थः सोऽनुग्रहीष्यत इति । सवनीयकाले ह्यालभ्यमानेषु न कस्यचित्पशोः कालम-

---

१ ( अ० ३ पा० ७ अ० १ सू० २ )। २ कालमतिक्रम्येतेति—प्रधानकालमित्यर्थ । अयमाशय । ज्योतिष्टोमे, भिन्नकालानुष्ठेयाना त्रयाणामग्नीषोमीयसवनीयानुबन्ध्याना पशूना ज्योतिष्टोमविकारभूते श्येनयागेऽतिदिष्टाना साहित्यं श्रूयते ' सह पशूनालभते ' इति । तच्च साहित्यं कस्मिन्देश इत्यपेक्षाया यत्रैवानुष्ठाने प्रधानभूतसोमयागप्रत्यासत्ति, त्रयाणा पशुयागाना संभवति । सवनीयस्यैव तु सुत्याकालीनत्वेन तत्रैव लभ्यते । एव सवनीयस्थान एव पूर्वोत्तरयोरनुष्ठाने द्वयोरप्यग्नीषोमीयानुबन्ध्ययो स्वस्थानातिक्रममात्रेण तुल्यकालोत्कर्षोऽपकर्षश्च भवत. । इतरथा, अनुबन्ध्यास्थाने—अवभृथान्ते, सवनीयाग्नीषोमीययोरनुष्ठाने, सवनीयस्य स्वस्थानातिक्रममात्रं, अग्नीषोमीयस्य तु स्वस्थानातिक्रम. सवनीयस्थानातिक्रमश्च । एवमग्नीषोमीयस्थाने—औपवसथ्येऽहनि, सवनीयानुबन्ध्ययोरनुष्ठाने, सवनीयस्य स्वस्थानातिक्रममात्रं, अनुबन्ध्यायास्तु स्थानद्वयातिक्रमश्च प्रसज्येत । अतश्च प्रधानप्रत्यासत्तिस्थानातिक्रमसाम्यान्यथा सवनीयस्थान एव त्रयाणामनुष्ठानमिति न्यायत एव सिध्यतीति ।

भवति । तस्मात्सर्वेषामङ्गानां नवनीतमिति ॥ ४१ ॥

[ २२ ] मांसं तु सवनीयानां चोदनाविशेषात् ॥ ४२ ॥ सि०

शाक्यानामयनं षट्त्रिंशत्संवत्सरम् । तत्रेदं समामनन्ति संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति, स तत्र यान्मृगान्हन्ति, तेषां तरसाः पुरोडाशाः सवनीया भवन्ति, इति । तत्र संदेहः । किं सवनीयानामन्येषां च संभवतां पुरोडाशानां स्थाने तरसा उत सवनीयानामेवेति । किं प्राप्तम् । सर्वपुरोडाशानां मांसमयता स्यात् । न शक्यते पुरोडाशानां च मांसमयता विधातुं सवनीयशब्देन च पुरोडाशान्विशेषयितुम् । भिद्येत हि तथा वाक्यम् । तस्मात्सर्वपुरोडाशाना मांसमयतेति प्राप्ते । उच्यते । मांसं तु सवनीयानां स्यात् । तरसाः सवनीया भवन्तीति तरससवनीयसंबन्धो विधीयते, तरसाः पुरोडाशा भवन्ति, इत्ययं त्वनूद्यते । कुत एतत् । सर्वपुरोडाशेषु सवनीयशब्दोऽनुवादो न घटते, पुरोडाशशब्दस्तु सवनीयेष्ववकल्पते । तस्मात्पुरोडाशशब्दोऽनुवाद इति । तस्मात्सवनीयानां धानादीनां स्थाने मांसं चोदनाविशेषादिति ॥ ४२ ॥

भक्तिरसंनिधावन्याय्येति चेत् ॥ ४३ ॥

इति चेत्पश्यसि, सवनीयेषु पुरोडाशब्दोऽनुवादो भविष्यतीति । धानादिषु पुरोडाशशब्दो न वर्तते । भक्तिश्चान्याय्या मुख्ये संभवति । ॥ ४३ ॥

---

तिक्रम्येत । न च द्विगुणोऽध्वा भवति । इतरथा द्वयमपि स्यात् । तस्मादुपपन्नं दर्शनम् ॥ ४१ ॥

( इति—सर्वेषामेव श्येनीयाज्यकार्याणा हृतिनवनीताधिकरणम् ॥ २१ ॥ )

---

पुरोडाशशब्दस्य धानादिष्वसमर्थत्वात्सर्वपुरोडाशविषयत्वं सत्यपि सवनीयत्वे विशेष्टुमशक्यत्वादिति प्राप्तेऽभिधीयते । सवनीयशब्दस्याप्रमादपाठात्पुरोडाशशब्दं लिङ्गसमवायाद्गौण कृत्वा धानादीनामपि ग्रहणमिति ॥ ४२ ॥

अत्यन्तभिन्नत्वाद्द्रव्यान्तरेषूपचारो न युक्तो यदि वा सवनीयशब्दस्याप्यवयुत्यानुवादेन भवत्विति ॥ ४३ ॥

---

१ सर्वेषां सवनीयानामन्येषां च स्थाने तरसा इति पा० । २ लिङ्गमवाय—अल्पत्वम् । धाना. करम्भ परिवाप. पुरोडाश, पयस्येति पञ्च सवनीयानि हवींषि । तेषु पुरोडाशस्यैकत्वादल्पत्वाख्यगौणीवृत्तिनिमित्तेन पुरोडाशशब्दो गौण इत्यर्थ ।

स्यात्प्रकृतिलिङ्गत्वाद्वैराजवत् ॥ ४४ ॥

प्रकृतौ ज्योतिष्टोमे धानादिष्वयं पुरोडाशशब्दो भाक्तः संनिहितेषु प्रयुक्तः । इहापि भाक्त एव प्रयोक्ष्यते । अत्रापि हि सवनीयशब्देन ते संनिहिताः । प्रकृतौ लिङ्गसमवायाच्छब्दप्रवृत्तिर्विकृतावपि तथैव । यथा, छत्रिणो गच्छन्ति, ध्वजिनो गच्छन्तीति । यथा, उक्थ्यो वैरूपसामा, एकविंशः षोडशी वैराजसामा, इति प्रकृतिलिङ्गेन सामशब्देन वैरूपपृष्ठो वैराजपृष्ठ इति गम्यते । एवमिहापि सवनीयानां मांसमयतेति ॥ ४४ ॥

इति श्रीशबरस्वामिविरचिते मीमांसाभाष्ये तृतीयस्याध्यायस्याष्टमश्चरणः ॥ संपूर्णश्च तृतीयोऽध्यायः ॥

---

'पुरोडाशानलङ्कुरु' इति प्रकृतौ धानादिषु लक्षणा दृष्टा न तु सवनीयशब्दस्यासवनीयेषु प्रवृत्तिः । साहित्याच्च शक्यते तेन लक्षयितुं नेतरेण । न ह्यसवनीयस्य पुरोडाशस्य धानादिभिः सह सम्बन्धोऽस्ति । तस्माद्धानादीनां स्थाने तरसा इति सिद्धम् ।

इति कथितबलाबलप्रवेकै-
रवगतसर्वविरोधबाधमार्गैः ।
श्रुतिकृतदृढनिश्चयैः प्रमाणैः
स्थित इह कर्मसु शेषशेषिभावः ॥

( इति—सवनीयहविषां मांसमयत्वाधिकरणम् ॥ २१ ॥ )

---

इति श्रीभट्टकुमारिलविरचिते मीमांसाभाष्यव्याख्याने तन्त्रवार्तिके तृतीयाध्यायस्याष्टमः पादः ।

---

संपूर्णश्च तृतीयोऽध्यायः ।
समाप्तं च तन्त्रवार्तिकम् ।

---

१ गौणं लाक्षणिकं वाऽपि वाक्यभेदेन वा स्वयम् । वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् । इति न्यायेन पुरोडाशशब्दस्यैव गौणत्वौचित्यं सूचयन् सिद्धान्तमाह—पुरोडाशानित्यादिना ।

# अङ्गत्वनिरुक्तिविषयानुक्रमणिका ।


| विषयाः | पृष्ठसंख्या । |
|---|---|
| परार्थत्वाक्षेपः | ११४१–११४३ |
| परार्थत्वनिर्वचनम् | ११४३–११४७ |
| कृतिकारकत्वाक्षेपः | ११४७ |
| कृतिकारकत्वनिर्वचनम् | ११४८–११४९ |
| विहितत्वाक्षेपः | ११४९ |
| विहितत्वनिर्वचनम् | ११४९–११५१ |
| आङ्गित्वनिरूपणम् | ११५१–११५२ |
| स्वाभिमताङ्गत्वपरिष्कारः | ११५२ |
| आङ्गित्वस्य तृतीयाध्यायार्थत्वाभावे विनिगमकम् | ११५३ |
| पराभिमत प्राचीनोक्ताङ्गत्वलक्षणपरिष्कारः, तत्खण्डनं च | ११५३ |
| पराभिमताङ्गत्वलक्षणं तन्निराकरणं च | ११५३–११५४ |
| क्रत्वर्थत्वपुरुषार्थत्वाक्षेपः | ११५४ |
| तन्त्ररत्ने पार्थसारथिमिश्रोक्तक्रत्वर्थपुरुषार्थलक्षणम् | ११५४–११५५ |
| तन्त्ररत्नोक्तक्रत्वर्थपुरुषार्थलक्षणदूषणम् | ११५५ |
| शास्त्रदीपिकोक्तक्रत्वर्थपुरुषार्थलक्षणं तद्दूषणं च<br>खण्डदेवाभिमतक्रत्वर्थपुरुषार्थलक्षणम् | ११५५ |
| खण्डदेवाभिमतक्रत्वर्थपुरुषार्थलक्षणे यथाश्रुते दोषाभिधानम् । | ११५५–११५७ |
| स्वाभिमतक्रत्वर्थपुरुषार्थलक्षणं स्वोक्तलक्षणे परापादितदूषणनिरासश्च | ११५७–११६१ |
| क्रत्वर्थपुरुषार्थयोः प्रत्येकमवान्तरभेदः | ११६१–११६२ |
| संनिपत्योपकारकलक्षणम्<br>पराभिमतसंनिपत्योपकारकलक्षणनिरासः<br>आरादुपकारकलक्षणम् | ११६२ |
| अङ्गत्वे च श्रुत्यादीनि षट् प्रमाणानि | ११६२ |
| श्रुतिस्वरूपाक्षेपः | ११६२–११६३ |
| नव्योक्तश्रुतिलक्षणम् | ११६३ |
| नव्योक्तश्रुतिलक्षणे स्वोन्नीततदाशयविवरणं तत्समर्थनं च | ११६३–११६७ |

| विषयाः | पृष्ठसंख्या। |
|---|---|
| नव्योक्तश्रुतिलक्षणदूषणम् | ११६७–११६८ |
| स्वाभिप्रेतश्रुतिलक्षणम् | ११६८–११७० |
| पराभिमतोऽङ्गत्वप्रमाणान्तर्गतश्रुतिविभागः, तल्लक्षणं च | ११७० |
| विनियोक्त्रीलक्षणम् | ११७० |
| प्राचीनोक्तश्रुतिलक्षणदूषणम् | ११७०–११७१ |
| प्राचीनोक्तलिङ्गलक्षणम् | ११७१ |
| नव्योक्तलिङ्गलक्षणं लक्ष्ये तल्लक्षणसमन्वयश्च | ११७१–११७३ |
| लिङ्गविभागः | ११७४–११७५ |
| प्राचीनाभिमतवाक्यलक्षणम् | ११७५ |
| नव्याभिमतवाक्यलक्षणं तत्समन्वयश्च | ११७५–११७६ |
| औदुम्बराधिकरणसिद्धान्ताक्षेपः तत्समाधानं च | ११७५–११७८ |
| वाक्यलक्षणस्योदाहरणविशेषेऽव्याप्तिशङ्का, तत्समाधिश्च | ११७८–११८० |
| प्राचीनोक्तवाक्यलक्षणस्य पराभिमतपरिष्कारः, तत्खण्डनं च<br>वाक्यलक्षणस्य लक्ष्यनिर्देशः<br>मन्त्रवाक्यलक्षणम् | ११८० |
| मन्त्रवाक्यब्राह्मणवाक्ययोर्बलाबलविवेकः | ११८०–११८१ |
| प्रकरणलक्षणाक्षेपः | ११८१–११८२ |
| स्वाभिमतप्रकरणलक्षणम् | ११८२–११८३ |
| नव्याभिमतप्रकरणलक्षणम् | ११८३–११८४ |
| प्राचीनाभिमतप्रकरणलक्षणं, तद्दूषणं च | ११८४–११८५ |
| प्रकरणस्याङ्गत्वप्रामाण्यप्रकारः | ११८५ |
| प्राचीनोक्तस्थानलक्षणं तन्निष्कर्षश्च | ११८५–११८६ |
| नव्योक्तस्थानलक्षणम् | ११८६ |
| पराभिमतस्थानलक्षणं तद्दूषणं च | ११८७ |
| स्थानविभागः, तत्तदुदाहरणं च | ११८७ |
| स्थानावान्तरभेदानां बलाबलविवेकः | ११८७–११८८ |
| प्राचीनोक्तसमाख्यालक्षणम्<br>प्राचीनोक्तसमाख्यालक्षणनिष्कर्षः<br>यौगिकत्वाक्षेपः, तन्निर्वचनं च | ११८८ |
| स्वाभिप्रेतसमाख्यालक्षणम् | ११८८–११८९ |
| समाख्याविभागः, तदुदाहरणं च | ११८९ |

| विषयाः | पृष्ठसंख्या। |
|---|---|
| समाख्याया अङ्गत्वप्रामाण्यप्रकार. | ११८९–११९० |
| श्रुत्यादिप्रमाणकाङ्गत्वोपसंहार. | ११९० |
| स्वकृतग्रन्थस्य सफलत्वोपन्यासः | ११९० |
| स्वकृतग्रन्थेऽधिकारिकथनम् | ११९० |

समाप्ता चाङ्गत्वनिरुक्तिविषयानुक्रमणिका ।



ॐ तत्सद्ब्रह्मणे नमः ।

श्रीमन्मुरारिमिश्रविरचिता ।

# अङ्गत्वनिरुक्तिः ।

नमामि तुलजां स्वीयकुलजाद्यधिदेवताम् ।
सर्वाभीष्टफलप्राप्त्यै ब्रह्मादिभिरभिष्टुताम् ॥
मुरारिससेवनशुद्धबुद्धिः कुमारिलप्रोक्तमतानुसारी ।
मुरारिरङ्गत्वनिरुक्तिमेता करोति सद्युक्तिगणैरुपेताम् ॥

तत्राङ्गत्वं न तावज्जातिः, तत्साधकाभावात् । क्रियात्वादिजात्या साङ्कर्याच्च । जात्यादिसाधारणाङ्गत्वस्य जातित्वायोगाच्च । 'व्रीहिभिर्यजेत' इत्यादौ व्रीहिपदवाच्यजात्यादेरेव द्रव्यपरिच्छेदद्वारा यागाङ्गत्वस्य सिद्धान्तसिद्धत्वात् । अङ्गत्वस्य सनिरूपकत्वेन जातित्वायोगाच्च । सकलाङ्गसाधारणानुगताकारप्रतीतेरभावादेव नाखण्डोपाधित्वम् । अतः 'शेषः परार्थत्वात्' इति सूत्रेण परार्थत्वमेवाङ्गत्वं जैमिनिराह । न च सूत्रे शेषत्वापरपर्यायाङ्गत्वे साध्ये परार्थत्वस्य पञ्चम्या हेतुत्वोक्तेर्हेतोश्च साध्याभिन्नत्वात्कथमङ्गत्वस्य परार्थत्वरूपत्वमिति वाच्यम् । तत्र शेषपदवाच्यत्वस्य साध्यत्वात् । अत एव शेषपदवाच्यत्वानुमाने, इतरभेदसाध्यकानुमान इव पक्षतावच्छेदकमेतदेव । अस्मन्मते साध्यवदन्यावृत्तित्वरूपसाध्यसामानाधिकरण्याघटितव्याप्तिज्ञानस्यैवानुमितिहेतुतया पक्षतावच्छेदकहेत्वोरैक्येऽपि सिद्धसाधनासंभवात् । प्रकृतानुमानस्य व्यतिरेक्यनुमानत्वेन साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिज्ञानस्यानुमितिहेतुत्वेन तदभावाच्च । वस्तुतो व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानस्यानुमितिहेतुत्वेन पक्षतावच्छेदकहेत्वोरैक्ये न सिद्धसाधनम् । पक्षतावच्छेदकरूपहेतौ साध्यसामानाधिकरण्यग्रहकाले तुल्यवित्तिवेद्यतया साध्ये पक्षतावच्छेदकाधिकरणवृत्तित्वभानेऽपि पक्षतावच्छेदकावच्छिन्नविशेष्यताकसाध्यवत्तानिर्णयाभावात् । अत एव पृथिवीत्वादेरपि पृथिव्यादिलक्षणत्वमुक्तं तार्किकैरित्यन्यदेतत् । शेषपदशक्यतावच्छेदकमप्येतदेव । अन्यानिरुक्तेः । अत एव शेषत्वस्य वक्ष्यमाणरीत्या नानात्वेन तत्पदं नानार्थकं बोध्यम् ।

अथ किं नाम परार्थत्वम् । न तावत्परोपकारकत्वम् । तद्धि यद्यदुपकारकं तत्तदङ्गमिति विशिष्य निर्वाच्यम् । तथा च कृष्यादौ यागाद्यङ्गत्वप्रसङ्गः । नापि विहितत्वघटितं तत् । पश्वङ्गभूतप्रयाजगोदोहनादीनां पुरोडाशप्रणयनाद्युपकारकत्वेन तदङ्गत्वापत्तेः । अथान्यानुपकारकत्वघटितं तत् । प्रयाजादीनां पुरोडाशाद्युपकारकत्वेऽपि पुरोडाशाद्यन्यपशूपकारकत्वान्नोक्ताङ्गत्वप्रसङ्ग इति चेत् । उक्तानां पश्वङ्गत्वानापत्तेः । अथान्याप्रयुक्तत्वघटितं तत् । प्रयाजादीनां पश्वङ्गपुरोडाशाद्युपकारकत्वेऽपि तदप्रयुक्तत्वान्नाव्याप्तिः ।

१ स्वस्वाभीष्टेति पा० । २ ( अ० ३ पा० १ अ० २ सू० २ ) ।

पुरोडाशाद्यन्यपशुप्रयुक्तत्वाच्च न पुरोडाशाद्यङ्गत्वप्रसङ्ग इति चेत्। प्रकृतिप्रयुक्ताङ्गानां विकृत्यङ्गत्वानापत्तेः। ननु यदन्यमात्राप्रयुक्तत्वे सति यदुपकारकं यत्तत्तदङ्गम्। यदन्यमात्राप्रयुक्तत्वं च यदप्रयुक्तत्वे सति यदन्यप्रयुक्तत्वम् [1] लाघवात्। यदप्रयुक्तत्वस्यैव निवेशेऽप्रयोज्यकालदेशाद्यङ्गेष्वव्याप्तिः। अतो विशिष्टाभावसंपत्त्यै यदन्यप्रयुक्तत्वरूपं विशेष्यम्। एवं च प्राकृताङ्गानां विकृत्यन्यप्रकृतिप्रयुक्तत्वेऽपि विकृत्यप्रयुक्तत्वाभावाद्विशेषणाभावप्रयुक्तविशिष्टाभावसत्त्वेन यदन्यमात्राप्रयुक्तत्वम्। अतो नाव्याप्तिरिति चेन्न। पुरोडाशकपालस्य तुषोपवापाङ्गत्वानापत्तेः। 'पुरोडाशकपालेन तुषानुपवपति' इत्यत्र हि 'कपालेषु पुरोडाशं श्रपयति' इत्यनेन पुरोडाशप्रयुक्तत्वेनावगतस्यैव कपालस्य तुषोपवापाङ्गत्वेन विधानात्पुरोडाशकपालस्य न तुषोपवापप्रयुक्तत्वमित्युक्तं चतुर्थे [2]। अतस्तुषोपवापान्यपुरोडाशमात्रप्रयुक्तत्वात्पुरोडाशकपालस्य तुषोपवापाङ्गत्वानापत्तिः। यदि तु यदन्यप्रयुक्तत्वानवच्छेदकयदुपकारकतावच्छेदकरूपवद्यत्तत्तदङ्गमित्यनवच्छेदकत्वघटितं तत्। तथा च प्राकृताङ्गानां विकृत्यङ्गत्वोपपत्तिः। तथा हि। प्राकृताङ्गानां तावद्विकृत्युपकारकत्वं न प्रकृतिप्रयुक्तत्वावच्छेदकसमित्त्वादिना। समित्त्वादेरननुगतत्वेन प्रत्येकातिदेशकल्पने गौरवापत्तेः। अपि तु दर्शपूर्णमाससंबन्ध्यङ्गत्वेन सर्वाण्यङ्गान्यनुगमय्य दर्शपूर्णमाससंबन्ध्यङ्गैर्विकृतिमुपकुर्यादित्येकातिदेशकल्पनया निरुक्तरूपेणोपकारकत्वम्। प्रकृतिप्रयुक्तत्वं तु तत्तद्वाक्यैस्तत्तद्रूपेणैवावगतमिति तत्तद्रूपस्यैव प्रकृतिप्रयुक्तत्वावच्छेदकत्वम्। अतश्च विकृत्यन्यप्रयुक्तत्वानवच्छेदकप्रकृतिसंबन्ध्यङ्गत्वरूपविकृत्युपकारकतावच्छेदकधर्मवत्त्वान्न प्राकृताङ्गानां विकृत्यङ्गत्वानापत्तिः। न वा पुरोडाशकपालस्य तुषोपवापाङ्गत्वानापत्तिः। कपालत्वस्य पुरोडाशप्रयुक्तत्वावच्छेदकत्वेन पुरोडाशीयत्वस्य च तुषोपवापोपकारकतावच्छेदकत्वेन पुरोडाशप्रयुक्ततानवच्छेदकपुरोडाशीयत्वरूपतुषोपवापोपकारकतावच्छेदकरूपवत्त्वादिति विभाव्येत। तदा भेदनहोमस्य दर्शपूर्णमासाङ्गत्वानापत्तिः। भेदनरूपनिमित्तप्रयुक्तत्वावच्छेदकविजातीयहोमत्वस्यैव दर्शपूर्णमासोपकारकतावच्छेदकत्वात्। न च प्रकृतेऽन्यप्रयुक्तत्वम्, अन्यनिष्ठोद्देश्यतानिरूपककृतिविषयत्वम्। तत्र चोद्देश्यत्वमीप्सितत्वरूपं न त्वनुपादेयपञ्चकसाधारणम् [3], तथा च भेदनादिरूपे निमित्ते,

---

१ एवं यदन्यप्रयुक्तत्वस्यैव निवेशे विकृत्यन्यप्रकृतिप्रयुक्तानामङ्गानां विकृत्यङ्गत्वानापत्तेः। अतो यदप्रयुक्तत्वरूपं विशेषणमिति च बोध्यम्। २ ( अ० ४ पा० १ अ० ११ सू० २६ ) इत्यत्रेति शेषः। ३ अनुपादेयपञ्चकसाधारणमुद्देश्यत्वं च, कृतिसमवायाघटितसंबन्धेन प्रकृतभावनान्वितत्वे सति प्रकृतविधिप्रयुक्त्यविषयत्वरूपं ज्ञेयम्। देशः कालो निमित्तं च फलं संस्कार्यमेव च। मीमांसानिपुणाः प्राहुरनुपादेयपञ्चकम्॥ इत्यभियुक्तप्रसिद्ध्या देशादीनामनुपादेयत्वं विवक्षितम्। कर्तुस्तदेकत्वस्य चोपादेयत्वेनाभिमतस्य विधिप्रयुक्त्यविषयत्वेन तत्रातिव्याप्तिवारणाय कृतिसमवायाघटितसंबन्धेनेत्याद्यं विशेषणम्। यागादावतिव्याप्तिवारणाय प्रकृतविधिबोधितानुष्ठानविषयत्वरूपं प्रकृतविधिप्रयुक्त्यविषयत्वमिति च बोध्यम्।

उक्तविधोद्देश्यत्वाभावान्निरुक्तप्रयुक्ततावच्छेदकत्वं विजातीयहोमत्वेऽक्षतमिति वाच्यम् । तथाऽपीन्द्रियादिप्रयुक्तत्वावच्छेदकदधित्वादिनैव होमोपकारकत्वाद्दध्नो होमाङ्गत्वानापत्तेः । होमप्रयुक्तत्वावच्छेदकदधित्वादिनेन्द्रियोपकारकत्वात्तदङ्गत्वानापत्तेश्च । किंच विजातीयस्वर्गप्रयुक्तत्वावच्छेदकदर्शपूर्णमासत्वादिनैव पापक्षयोपकारकत्वावच्छेदकदर्शपूर्णमासादीनां पापक्षयाङ्गत्वानापत्ति । न हि स्वर्गप्रयुक्तत्वावच्छेदकवैजात्यातिरिक्तं पापक्षयोपकारकतावच्छेदकं वैजात्यमस्ति, तथात्वे स्वर्गार्थमनुष्ठितप्रयोगेण नित्यस्य प्रसङ्गासिद्धयनापत्तेः । अपि च दर्शपूर्णमासप्रयुक्तत्वावच्छेदकाज्यभागत्वेनैव गृहमेधीयोपकारकत्वादाज्यभागयोर्गृहमेधीयाङ्गत्वानापत्तिः न । हि विकृत्यन्तरेऽतिदेशप्रापिताङ्गानां प्रकृतिसंबन्धित्वेन विकृत्युपकारकत्ववदिहाऽऽज्यभागयोर्दर्शपूर्णमाससंबन्धित्वेन गृहमेधीयोपकारकत्वम् । येनान्यप्रयुक्तत्वानवच्छेदकदर्शपूर्णमाससंबन्ध्यङ्गत्वरूपगृहमेधीयोपकारकतावच्छेदकरूपवत्त्वादाज्यभागयोर्गृहमेधीयाङ्गत्वं भवेत् । 'आज्यभागौ यजति' इति गृहमेधीयप्रकरणस्थप्रत्यक्षवचनेनाऽऽज्यभागत्वेनैवाऽऽज्यभागविधानात् । वस्तुतो दर्शपूर्णमाससंबन्ध्यङ्गत्वमपि विकृत्यन्तरप्रयुक्तत्वावच्छेदकं भवत्येवेति सत्यपि तस्य गृहमेधीयोपकारकतावच्छेदकत्वे नाऽऽज्यभागयोस्तदङ्गत्वनिर्वाहः । अत एव प्राकृताङ्गानां विकृत्यङ्गत्वानापत्तिरपि पूर्वोक्ता तदवस्थैव । तत्तद्विकृतिभेदेन लक्षणभेदादेकविकृत्युपकारकतावच्छेदकदर्शपूर्णमाससंबन्ध्यङ्गत्वादेरपि विकृत्यन्तरप्रयुक्तत्वावच्छेदकत्वात् । नापि परोद्देश्यककृतिविषयत्वं परार्थत्वम् । कृत्यविषये कालादावव्याप्तेः । अत एव नोक्तकृतिसमवायित्वमपि । कर्तरि लक्षणसत्त्वेऽपि प्रयाजादावव्याप्तेः । अथ समवायसाध्यत्वकालिकान्यतमसंबन्धेन तादृशकृतिमत्त्वम् । प्रयाजादौ साध्यत्वसंबन्धेन तादृशकृतिमत्त्वसत्त्वान्नोक्ताव्याप्तिरिति चेन्न । जात्यादिरूपाङ्गेऽन्यतमसंबन्धेनोक्तकृतेरभावादव्याप्तेः । येन केनापि संबन्धेनोक्तकृतिसंबन्धित्वोक्तौ निमित्तादावतिव्याप्तिरिति दुर्वचं परार्थत्वमिति चेत् । अत्र ब्रूमः । निरूपकत्वसंबन्धेन यन्निष्ठोद्देश्यताविशिष्टकृतिकारकत्वेन विहितं यत्तत्त्वं तदङ्गत्वम् । यथा दर्शपूर्णमासाभ्यामित्यत्र स्वर्गनिष्ठोद्देश्यताविशिष्टकृतिकारकत्व दर्शपूर्णमासयोरतस्तयोस्तदङ्गत्वम् । एव 'समिधो यजति' इत्यादिवाक्येषूपस्थितदर्शपूर्णमासयोरेवोद्देश्यत्वेनान्वयाद्दर्शपूर्णमासोद्देश्यताविशिष्टकृतिकारकत्वं प्रयाजादीनामतस्तेषां तदङ्गत्वम् । एवं द्रव्यगुणजात्यादीनां करणत्वेन, कर्तुश्च, कर्तृत्वेन कालादेरधिकरणत्वेनान्वयान्न क्वाप्यव्याप्तिः । अत्र यत्त्वतत्त्वादेरननुगमात्स्वर्गनिष्ठोद्देश्यताविशिष्टकृतिकारकत्वेन विहितत्वं स्वर्गाङ्गत्वमित्येवरीत्योद्देश्यतावच्छेदकभेदेन लक्षणभेदो बोध्यः । न त्वङ्गत्वावच्छेदकभेदेन, तस्य लक्षणेऽप्रवेशात् । अत एव स्वर्गाङ्गसकलसा-

१ अन्यत उपकारलाभप्रयुक्ताङ्गानानुष्ठानं प्रसङ्गः ।

धारणमेकमङ्गत्वलक्षणं न त्वाग्नेयत्वाग्नीषोमीयत्वादिभेदेन लक्षणभेद इति ध्येयम् । प्रकारतया निरूपकत्वनिवेशे गौरवान्निरूपकत्वसंबन्धेनोक्तोद्देश्यताविशिष्टकृतिकारकत्वेन विहितत्वमित्येवं संबन्धविधया तन्निवेशः । तत्प्रयोजनं तु स्वाश्रयप्रयोजकत्वसंबन्धेन, अन्तत एकज्ञानविषयत्वादिसंबन्धेन च स्वर्गनिष्ठोद्देश्यताविशिष्टप्रयाजाद्यनुकूलकृतिकारकत्वस्य प्रयाजादौ सत्त्वादतिव्याप्तिवारणम् । अत्र शुद्धकृतिकारकत्व—उद्देश्यताविशिष्टकृतिकारकत्व—निष्ठोद्देश्यताविशिष्टकृतिकारकत्वाना प्रयाजादौ स्वर्गाद्यनङ्गप्रधाने च सत्त्वादतिव्याप्तिरतो विशिष्टमुपात्तम् । उद्देश्यतात्वेनोद्देश्यतानुपादाने तु निरूपकत्वसंबन्धेन स्वनिष्ठप्रयोज्यताविशिष्टप्रयाजाद्यनुकूलकृतिकारकत्वं प्रयाजादीनामतस्तदुपादानाम् । कृतीति स्वरूपकथनम् । तन्निवेशे प्रयोजनाभावात् । ‘न च स्वर्गोद्देश्यको यागः’ इत्यादिप्रतीत्या स्वर्गनिष्ठोद्देश्यतानिरूपकत्वस्य दर्शपूर्णमासादावपि सत्त्वात्स्कारकत्वस्य च तज्जनकद्रव्यादावपि सत्त्वात्तत्रातिव्याप्तिवारणमेव तत्प्रयोजनमिति वाच्यम् । अस्मन्मते कारकत्वस्य भावनैकनिरूपितत्वेन धात्वर्थयागाद्यनिरूपितत्वात् । स्वर्गनिष्ठत्वं च दैशिककालिकविशेषणत्वातिरिक्तस्वरूपसंबन्धेन । इतरथा कालिकसंबन्धेन प्रयाजादिकरणककृत्युद्देश्यताया अपि स्वर्गवृत्तित्वेनातिव्याप्तिप्रसङ्गात् । वस्तुतः स्वर्गनिष्ठत्वं विषयत्वीयस्वरूपसंबन्धेन । इत्थं चोद्देश्यतात्वेनोद्देश्यत्वानुपादानेऽपि न क्षतिः । प्रयाजादिकरणककृतिप्रयोज्यताया विषयत्वीयस्वरूपसंबन्धेन स्वर्गनिष्ठत्वाभावात् । निमित्तादावतिव्याप्तिवारणाय संबन्धित्व विहाय कारकत्वनिवेशः । निमित्तस्य वक्ष्यमाणरीत्याऽकारकत्वाददोषः । अत एव निमित्तत्वार्थकसप्तम्या उपपदविभक्तित्वमुक्तं तत्र तत्र । कृष्यादावतिव्याप्तिवारणाय विहितेति । न चोक्तकृतिकारकत्वस्य स्वर्गेऽपि सत्वात्तस्य स्वाङ्गत्वापत्तिरिति वाच्यम् । कर्मकारकभिन्नकारकत्वस्यैव लक्षणे निवेशात् । एतदर्थमेव सूत्रे भिन्नार्थक परपदम् । न च सूत्रे ‘देवदत्तोऽयं परोपकारक.’ इत्यादिवदौत्सर्गिकस्वप्रतियोगिकत्वलाभादङ्गभेदस्यैव परपदादुपस्थितेः कथं कर्मकारकभेदरूपस्याङ्गभेदस्य ततः प्रतीतिरिति वाच्यम् । समानसंवित्संवेद्यतयाऽङ्गभेदस्य तस्मादुपस्थितिसंभवात् । न हि स्वभिन्नस्वर्गोद्देश्यककृतिकारकत्वरूप लक्षण संभवति । स्वत्वाननुगमेनाङ्गभेदेन लक्षणभेदप्रसङ्गादत उक्तभेद एव परपदतात्पर्यम् । ननु क्रियाजन्यफलशालित्वरूपकर्मत्वावच्छिन्नप्रतियोगिताकभेदनिवेशे गौरवात्कर्मत्वस्याखण्डोपाधिरूपत्वेऽपि च सामान्यतः कर्मत्वावच्छिन्नप्रतियोगिताकभेदस्य प्रयाजादिकरणककृतिकर्मदर्शपूर्णमासादावप्यभावेन स्वर्गोद्देश्यककृतिकर्मत्वावच्छिन्नप्रतियोगिताकभेदनिवेशे गौरवाल्लाघवेन स्वर्गत्वावच्छिन्नप्रतियोगिताकभेदस्यैव स्वर्गाङ्गत्वलक्षणे निवेशोऽस्तु । उद्देश्यभेदेन लक्षण.

---

१ गौरवादिति—निरूपकत्वस्य प्रकारतया प्रवेशे प्रकारतावच्छेदकसंबन्धस्यापि प्रवेशनीयत्वा गौरवम् । संबन्धविधया प्रवेशे तु संबन्धस्य संबन्धान्तरानपेक्षणाल्लाघवमिति बोध्यम् ।

भेदस्योक्तत्वादिति चेन्न । ' सर्वेभ्यो ज्योतिष्टोमः ' इत्यादिवाक्योपात्तफलाना पश्वादीनां स्वर्गाङ्गत्वापत्तेः । स्वर्गत्वावच्छिन्नभिन्नत्वे सति, उक्तकृतिकारकत्वस्य पश्वादौ सत्त्वात् । न च ' सर्वेभ्यो ज्योतिष्टोमः ' इति वाक्ये प्रवृत्तिप्रयोजककामनाविषयत्वस्योद्देश्यतावच्छेदकत्वात्पश्वादौ स्वर्गत्वावच्छिन्नोद्देश्यताककृतिकारकत्वस्याभावान्नोक्तदोष इति वाच्यम् । एतद्वाक्ये स्वर्गत्वस्योद्देश्यतानवच्छेदकत्वेऽपि ' ज्योतिष्टोमेन स्वर्गकामो यजेत ' इति वाक्ये तस्योद्देश्यतावच्छेदकत्वेन तदवच्छिन्नोद्देश्यताककृतिकारकत्वस्य पश्वादौ सत्त्वात् । वाक्यभेदेन कृतिभेदे प्रमाणाभावात् । अत एव पश्वर्थमनुष्ठीयमानप्रयोगात्स्वर्गस्याप्युत्पत्तियोगसिद्धयधिकरणोक्ता संगच्छते । अतश्चाखण्डोपाधिरूपकर्मत्वस्वीकारे स्वर्गोद्देश्यककृतिकर्मत्वावच्छिन्नप्रतियोगिताकभेदघटितमेव लक्षणमङ्गीकार्यम् । वस्तुतस्तु स्वावच्छिन्नोद्देश्यतानिरूपककृतिनिरूपितोद्देश्यतावत्त्वसंबन्धेन स्वर्गत्ववद्भिन्नत्वं प्रकृतलक्षणे निवेश्यम् । स्वर्गपश्वादेश्च तेन सबन्धेन स्वर्गत्ववत्त्वान्नातिव्याप्तिः । न चैवमपि दर्शपूर्णमासादौ स्वर्गाद्यङ्गत्वानापत्तिः । ' व्रीहिभिर्यजेत ' इत्यादिवाक्येषु स्वर्गोद्देश्यताकदर्शपूर्णमासाद्यनुकूलकृतावेव दर्शपूर्णमासयोरुद्देश्यत्वेन स्वावच्छिन्नोद्देश्यतानिरूपककृतिनिरूपितोद्देश्यत्वसबन्धेन स्वर्गत्ववत्त्वस्य दर्शपूर्णमासादौ सत्त्वादिति वाच्यम् । स्वावच्छिन्नोद्देश्यतानिरूपकतावच्छेदकावच्छिन्ननिरूपितोद्देश्यताकत्वसंबन्धेन स्वर्गत्ववद्भिन्नत्वस्य विवक्षितत्वात् । दर्शपूर्णमासकरणककृतौ स्वर्गोद्देश्यकत्वमित्यादिप्रतीत्या हि दर्शपूर्णमासकरणककृतित्वे स्वर्गत्वावच्छिन्नोद्देश्यतानिरूपकतावच्छेदकत्व सिध्यतीति तदवच्छिन्ननिरूपितोद्देश्यताकत्वसंबन्धेन स्वर्गत्ववत्त्वं स्वर्गे, यागे तद्भिन्नत्वमिति लक्षणसमन्वयः । न ह्येवं स्वर्गत्वावच्छिन्नोद्देश्यतानिरूपकतावच्छेदकत्वं व्रीहिकरणककृतित्वेऽस्ति, येन तदवच्छिन्ननिरूपितोद्देश्यताकत्वसबन्धेन स्वर्गत्ववत्त्व यागे समाप्येत । व्रीहिकरणककृतौ स्वर्गोद्देश्यकत्वमिति प्रतीतेरभावात् । वृत्त्यनियामकसंबन्धस्यात्यन्ताभावप्रतियोगितानवच्छेदकत्वेऽपि भेदप्रतियोगितावच्छेदकतावच्छेदकत्वस्य सिद्धान्तसिद्धत्वाच्च न सिद्धान्तविरोधः । सूत्रमपीदृशभेदपरतयैव व्याख्येयमिति तत्त्वम् । नन्वेवं सोमादरपि स्वर्गाद्यङ्गत्व स्यात् । नवीनमते मत्वर्थलक्षणानङ्गीकारेण यागस्येव सोमस्यापि स्वर्गोद्देश्यककृतिकारकत्वात् । न च कारकत्व वक्ष्यमाणरीत्या क्रियान्वितकर्तृत्वाद्यन्यतमान्वितत्वम् , तत्र क्रियान्वितत्वं कारकान्तराघटितसंबन्धेन प्रकृतलक्षणे निवेश्यम् । तथा च सोमकरणत्वस्य स्वनिरूपकयागकरणकत्वसंबन्धेनैव भावनान्वयादुक्तसंबन्धेन क्रियान्वितकर्तृत्वाद्यन्यतमान्वितत्वाभावान्न सोमे लक्षणातिप्रसङ्ग इति वाच्यम् । तथात्वे यागकरणत्वादेरपि स्वनिरूपकोद्देश्यक

---

१ ( अ० ४ पा० ३ अ० ९ )

त्वादिरूपकर्मकारकघटितसंबन्धेनैव भावनान्वयेनासंभवापत्तेः। अथोक्तातिव्याप्तिवारणाय प्रकृतकृतिकरणाद्यघटितसंबन्धेन क्रियान्वितत्वं प्रकृतलक्षणे निवेश्यम्। 'समिधो यजति' इत्यादौ प्रयाजादिकरणत्वस्यैव कृत्यन्तरकरणीभूतदर्शपूर्णमासादिरूपभाव्यघटितसंबन्धेनैव भावनान्वयादव्याप्तिरतः प्रकृतेति। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इतिवाक्यघटकाख्यातोपात्तकृतौ दर्शपूर्णमासयोः करणत्वेऽपि 'समिधो यजति' इतिवाक्यघटकाख्यातोपात्तसमिदाद्यनुकूलकृतौ तयोरुपकारविशिष्टयोर्भाव्यत्वमेवेति नाव्याप्तिः। 'सोमेन यजेत' इत्यादौ यागकरणत्वस्योद्देश्यस्वर्गादिघटितसंबन्धेन भावनान्वयेऽपि प्रकृतकृतिकरणयागाद्यघटितसंबन्धेनैव क्रियान्वयान्नोक्तदोषः। सोमादेस्तु प्रकृतकृतिकरणयागादिघटितसबन्धेनैव भावनान्वयान्नातिप्रसङ्ग इति चेन्न। 'दध्ना जुहोति' इत्यादावग्निहोत्रकरणककृतावेवाग्निहोत्रस्योद्देश्यत्वेन तत्र च स्वनिरूपकोद्देश्यकत्वरूपप्रकृतकृतिकरणघटितसंबन्धेनैव दधिकरणत्वस्यान्वयाद्दध्नो होमाङ्गत्वानापत्तेः। कृतौ प्रकृतत्वानिरुक्तेश्च। न च प्रकृतवाक्यघटकाख्यातप्रतिपाद्यत्वं कृतौ प्रकृतत्वम्। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्ये तत्तद्व्यक्तित्वादिरूपप्रकृतत्वसमवेऽपि दर्शपूर्णमासाङ्गप्रतिपादकसकलवाक्यसाधारणप्रकृतत्वनिरुक्तेः। यदि तु स्वर्गोद्देश्यकत्वादिकमेव कृतौ प्रकृतत्वमतो नाय दोष इति विभाव्यते। तथाऽपि दध्यादावव्याप्तिस्तदवस्थैव। अतः सोमादौ स्वर्गाद्यङ्गत्वप्रसङ्गो दुर्वार इति चेत्। सत्यम्। सोमादीनां स्वर्गाद्यङ्गत्वमिष्टमेव। न हि तत्स्वीकारे किंचिद्बाधकमस्ति। न चैवं तुल्ययुक्त्या 'यो दीक्षितो यदग्नीषोमीयं पशुमालभेत' इत्यत्र यागस्येव पश्वादेरपि ज्योतिष्टोमाङ्गत्वप्रसक्तौ तद्वदेव ज्योतिष्टोमविकृतावतिदेशापत्तिः। अग्नीषोमीयपृष्ठभावेनातिदेशस्येष्टत्वात्, अग्नीषोमीयाभाववत्या विकृतौ तु द्वारलोपादेव नातिदेशः। अग्नीषोमीयस्थानापन्नयागान्तरसत्त्वे तु तस्याग्नीषोमीयविकृतित्वादेवातिदेशः। सोमादेः समप्राधान्यं तु यागद्वारेणैवाङ्गत्वेन निरसनीयमिति ध्येयम्। उद्देश्यत्वमत्रेप्सिततत्वरूपम्। न त्वनुपादेयपञ्चकसाधारणम्। तथात्वे यावज्जीवमित्यादौ धात्वर्थादेर्निमित्ताङ्गत्वस्य दुर्वारत्वात्। अत एव यत्रानुपादेयपञ्चकसाधारणोद्देश्यताया निवेशो, यथा परोद्देश्यककृतिव्याप्यत्वरूपप्रयोज्यत्वे। तत्र निमित्तप्रयोज्यत्वं नैमित्तिकस्येष्टमेव। अत एव द्वितीयाविभक्तेरङ्गत्वघटकोद्देश्यताबोधकत्वेनाङ्गत्वप्रमाणत्वव्यवहारः। तृतीयादेस्तु तद्घटककरणत्वादिविभक्त्यर्थबोधकत्वेन तत्त्वव्यवहारः। लिङ्गादीनां तु बलाबलाधिकरणन्यायेनैतदन्यतरबोधकद्वितीयातृतीयादिरूपश्रुतिकल्पकत्वेन सः। एतेन द्वितीयाया प्राधान्यरूपोद्देश्यत्ववाचित्वेनाङ्गत्वप्रमाणत्वेऽपि नाङ्गत्वप्रमाणत्वमिति निर-

---

१ ( अ० ३ पा० ३ अ० ७ ) अग्नन्येनेति शेषः।

संख्यान्तरसाधनत्वाभावानुवादकैवकारानुपपत्तेः साह्नाहीनपदवैयर्थ्यापत्तेश्च वैदिकप्रयोगादहीनपदबोध्याहःसाध्यक्रतुविशेषसमूहात्मकाहीनसबन्ध्युपसदुद्देशेन द्वादशत्वविधिरिति प्राञ्चः सिद्धान्तयामासुः ।

नव्यास्तु—सुबर्थमात्रस्य भावनान्वयनियमेन षष्ठीस्थलेऽपि परस्परान्वयाव्युत्पत्तेरहीनसंबन्ध्युपसदुद्देशेन द्वादशत्वविध्यनुपपत्तेरहीनोद्देशेन द्वादशोपसत्त्वमेवातिदेशतः पूर्वप्रवृत्त्या विधीयते 'तां चतुर्भिः' इति वद्द्वादशत्वविधिरेव फलमित्याहुः ।

वयं तु ब्रूमः । 'पञ्चदशान्यान्याज्यानि' इत्यत्रेव द्वादशपदार्थोपसत्पदार्थयोरन्वयस्यावलृप्तत्वान्नव्योक्तस्याहीनोद्देशेन द्वादशत्वविधेरप्यसंभवः । 'ता चतुर्भिः' इत्यत्र त्वर्थप्राप्तेः पूर्वप्रवृत्त्याऽऽदानभावनाया एव विधेयत्वात्तत्र चतुःपदार्थवैशिष्ट्यव्युत्पत्तेः समुच्चयफलकविशिष्टविधिसंभव इति वैषम्यम् । अत उपसदुद्देशेनैव द्वादशत्वविधिः । उपसत्स्वरूपे चाऽऽनर्थक्यप्रसक्तौ दीक्षणीयावाङ्नियमन्यायरूपतात्पर्यग्राहकस्य न्यायत्वेन दुर्बलत्वादुपसज्जन्यापूर्वसाधनत्वलक्षणामुपेक्ष्याहीनपदसमभिव्याहाररूपवाक्यस्यैव तात्पर्यग्राहकत्वमुपेत्याहीनापूर्वसाधनीभूतोपसल्लक्षणाऽङ्गीक्रियते । यत्र तु दीक्षणीयावाङ्नियमन्यायेन समं वाक्यस्याविरोधो यथा त्रित्ववाक्ये साह्नपदसमभिव्याहाररूपवाक्यस्य । तत्र न तन्न्यायबाधः । तात्पर्यग्राहकयोरपि च बलाबलमुक्तं तत्र तत्र । यथा 'अभिक्रामं जुहोति' इत्यत्र होमोद्देशेनाभिक्रमणविधौ होमस्वरूप आनर्थक्यप्रसक्तौ दर्शपूर्णमासीयमहाप्रकरणरूपतात्पर्यग्राहकबलात्प्रधानहोमापूर्वसाधनलक्षणेति पूर्वपक्षं विधाय महाप्रकरणापेक्षया प्रबलप्रयाजीयावान्तरप्रकरणरूपतात्पर्यग्राहकबलात्प्रयाजहोमापूर्वसाधनत्वलक्षणेति सिद्धान्तितं तृतीये[1] । यद्यपि दृष्टान्तदार्ष्टान्तिकगतजुहोत्युपसत्पदयोरपूर्वाव्यभिचार एवापूर्वसामान्यसाधनत्वलक्षणातात्पर्यग्राहकः । तथाऽप्यपूर्वविशेषसाधनत्वलक्षणातात्पर्यग्राहकत्वेन वाङ्नियमन्यायादीनामुपन्यासः । यद्वोपसदाश्रितद्वादशत्वस्याहीनोद्देशेन विधिः, पूर्ववाक्य उद्देश्यत्वेनोपस्थितत्वादुपसदामेवाऽऽश्रयत्वम् । उपसत्पदावृत्त्यभावादप्येवमेव युक्तम् । सर्वथा षष्ठ्याः श्रुतित्वाभावादिदं वाक्यप्रकरणविरोधोदाहरणम् । तदपि च द्वादशोपसत्त्वविधायकवाक्याभावं कृत्वाचिन्तया । वस्तुतस्तत्र तद्वाक्यसत्त्वात्तेन सत्रात्मकद्वादशाह इवाहीनात्मकद्वादशाहेऽपि तत्प्राप्तिसंभवाद्द्वादशाहीनस्येति त्रित्वविधेरेवार्थवादः । महतो द्वादशाहस्य महती सङ्ख्योचिता, ज्योतिष्टोमस्य तु स्वल्पत्वात्त्रित्वमेव प्रशस्तमिति स्तुतिः । प्राचां मते षष्ठ्याः श्रुतित्वव्यवहारस्तु गौणः । अत एव तेषामत्र श्रुतिप्रकरणविरोधोदाहरणत्वोपन्यासः ।

वस्तुतस्तु नव्योक्तं वाक्यप्रकरणविरोधोदाहरणत्वमप्ययुक्तम् । तथा हि । किं

---

[1] ( अ० ३ पा० १ अ० १० ) इत्यत्रेति शेषः ।

विनियोजकप्रकरणेन सममत्र वाक्यस्य विरोधोऽभिप्रेत उतापूर्वसाधनत्वलक्षणातात्पर्यग्राहकप्रकरणेन । विनियोजकताऽपि किं ज्योतिष्टोममहाप्रकरणस्योतोपसद्वान्तरप्रकरणस्य । नाऽऽद्यः । ज्योतिष्टोममहाप्रकरणस्योपसद्गतद्वादशत्वग्राहकत्वायोगाज्ज्योतिष्टोमस्य द्वादशवारमावृत्त्यापत्तेश्च । न द्वितीयः । पूर्वापरवाचनिकाङ्गसंदंशरूपोपसद्वान्तरप्रकरणे मानाभावात्पक्षद्वयेऽपि सिद्धरूपत्वाद्द्वादशत्वस्य प्रकरणग्राह्यत्वायोगाच्च । उपसत्पदसमभिव्याहाररूपवाक्यस्यैव त्रित्वांश इव द्वादशत्वांशेऽपि विनिगमनाविरहेण विनियोजकत्वोपपत्तौ प्रकरणस्याविनियोजकत्वाच्च । दीक्षणीयावाद्नियमन्यायेनो[1]पसज्जन्यापूर्वसाधनत्वे लक्षणीये ज्योतिष्टोममहाप्रकरणस्य तात्पर्यग्राहकता तु न संभावितैव । उपसद्वान्तरप्रकरणसत्त्वे तस्य तात्पर्यग्राहकताऽपि, उपसदामपूर्वाव्यभिचारस्यैव तात्पर्यग्राहकस्य सत्त्वान्निराकार्या । उद्देश्यस्यापूर्वव्यभिचारे हि प्रकरणस्यापूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्वं, यथा 'व्रीहीनवहन्ति' इत्यादौ ।

अत एवाऽऽधानप्रकरणे 'वारणो यज्ञावचरः' इति यज्ञसाधनत्वेन श्रुतानां वारणादीनां साक्षाद्यज्ञरूपे, आधाने निवेशायोगादानर्थक्यतदङ्गन्यायेनाऽऽ[2]धानाङ्गपवमानेष्टिरूपयज्ञ एव निवेश इत्याशङ्क्य पवमानेष्टीनां 'यदाहवनीये जुहोति' इति स्वप्रकरणस्थवाक्येनाग्न्यङ्गत्वादाधानाङ्गत्वस्यैवाभावे क्वाऽऽनर्थक्यतदङ्गन्यायावकाश इति भाष्यकारमतेन सिद्धान्तमभिधाय वार्तिककारमते तादृशवाक्यानङ्गीकारात्प्रकरणेन पवमानेष्टीनामाधानाङ्गत्वेऽपि यज्ञोद्देशेन वारणादिविधौ यज्ञस्यापूर्वाव्यभिचारेणेहापूर्वसाधनत्वानवगमात्तदर्थं प्रकरणानुप्रवेशस्यैवाभावे वारणादीनामाधानाङ्गत्व एव प्रमाणाभावान्न तदङ्गपवमानेष्टिष्ववतार इति सकलयज्ञाङ्गत्वं नव्यैरेव सिद्धान्तितं तृतीये[3] । अतो द्वादशत्वविनियोगविधौ प्रकरणव्यापाराभावान्नेदं श्रुतिप्रकरणविरोधोदाहरणं, न वा वाक्यप्रकरणविरोधोदाहरणम् । अपि तु वाक्ययोः परस्परविरोधोदाहरणम् । पूर्वपक्षिमते वस्तुत उपसदां ज्योतिष्टोमीयत्वाज्ज्योतिष्टोमप्रकरणे द्वादशत्वस्य निवेशः सिद्धान्ते नेत्यतः प्रकरणविरोधोदाहरणत्वेन प्राचीनैर्नवीनैश्च व्यवाह्रियत इति तत्त्वम् । वाक्यप्रकरणविरोधोदाहरणं तु तदवसरे प्रदर्शयिष्यामः । तत्सिद्धं षष्ठ्याः श्रुतित्वाभावात्तद्वारकविशेषणोपादानम् ।

इदं तु बोध्यम् । कर्तृत्वकर्मत्वादिपदानां वाच्यत्वेनावाचकत्वात्तत्रातिव्याप्त्यसंभवेऽपि कर्तृत्वादिपरतदादिपदादावतिव्याप्तिर्दुर्वारा । न च कर्तृत्वत्वादीन्येवान्यतमत्वेनानुगमय्य तदन्यतमावच्छिन्नशक्तिनिरूपकत्वं लक्षणम् । तदादेस्तु बुद्धिविषयत्वावच्छिन्नत-

---

१ ( अ० ९ पा० १ अ० २ ) अत्रत्येनेति शेष. । २ (अ० ३ पा० १ अ० ९) अत्रत्येनेति शेष. । ३ ( अ० ३ पा० १ अ० १२ ) इत्यत्रेति शेष ।

दन्यतमनिष्ठशक्तिनिरूपकत्वमिति न दोष इति वाच्यम्। तद्वद्वितीयेऽपि विशेषरूपप्रकारकबोधानुरोधेन विशेषरूपावच्छिन्नशक्तिनिरूपकत्वस्यैव तत्राभ्युपगमात्, क्तप्रत्यये कर्मत्वत्वस्य शक्यतावच्छेदकतावच्छेदकत्वेन शक्यतावच्छेदकत्वाभावादतिव्याप्तिवारकप्राधान्येनेत्यस्य वैयर्थ्याच्च। सक्तूनिति द्वितीयायाः करणत्वलक्षणायामपि वस्तुतस्तादृशान्यतमत्वावच्छिन्नशक्तिनिरूपकत्वानपायादतिप्रसङ्गश्च। अतोऽस्मेदमाकलयामः।

स्वशक्यतावच्छेदककर्तृत्वत्वाद्यन्यतमावच्छिन्नतात्पर्यकप्रत्ययत्वं श्रुतित्वम्। 'व्रीहीन्प्रोक्षति' इत्यादिवाक्येषु द्वितीयादिश्रुतीनां स्वशक्यतावच्छेदककर्मत्वत्वाद्यवच्छिन्नतात्पर्यकत्वस्य संमार्गाधिकरणादौ निर्णीतत्वाल्लक्षणसमन्वयः। सक्तूनिति द्वितीयायास्तु स्वशक्यतावच्छेदककर्मत्वत्वाद्यवच्छिन्नतात्पर्यकत्वस्य सक्त्वधिकरणे निरस्तत्वान्नातिव्याप्तिः। अत्र स्वशक्यकर्तृत्वाद्यन्यतमतात्पर्यकत्वघटितस्य शेषषष्ठ्यामतिव्याप्तेरवच्छेदकानुधावनम्। तदादिवारणाय प्रत्ययत्वनिवेशः। कर्तृत्वत्वाद्यन्यतमावच्छिन्नतात्पर्यकविभक्तित्वस्य सक्तूनित्यादिकरणत्वादिपरद्वितीयादावतिव्याप्तिवारणाय स्वशक्यतावच्छेदकेति। अत एव 'प्रोक्षिताभ्यामुलूखलमुसलाभ्याम्' इत्यत्र क्तप्रत्ययस्य कर्मत्वविशिष्टे शक्तेः कर्मत्वत्वस्य शक्यतावच्छेदकतावच्छेदकत्वेन शक्यतावच्छेदकत्वाभावान्नातिव्याप्तिः।

आग्नेय इत्यादि देवतातद्धितस्य संग्राह्यत्वे कर्तृत्वाद्यन्यतममध्ये देवतात्वत्वमप्युपादेयम्। न च देवतात्वविशिष्टद्रव्यवाचकस्य तद्धितस्य देवतात्वस्य शक्यतावच्छेदकत्वाद्देवतात्वत्वं न शक्यतावच्छेदकमिति वाच्यम्। आकृत्यधिकरणन्यायेन देवतात्व एव तद्धितस्य शक्तेर्द्रव्ये लक्षणाङ्गीकारात्। न च 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यादौ राजादिपदोत्तरप्रथमायाः साधुत्वार्थत्वेन कर्तृत्वाद्यन्यतमार्थत्वाभावादव्याप्तिः। अभिहितकारकवाचिनी प्रथमेति मते प्रथमाया अप्याख्यातार्थकर्तृत्वाद्यर्थकत्वात्समभेदे नान्यतरवैयर्थ्यमितिन्यायात्, प्रथमायाः साधुत्वार्थत्वमते श्रुतित्वाभावेऽपि क्षतिविरहात्, 'राजा राजसूयेन यजेत' इत्यादौ राजाद्यङ्गत्वस्य वाक्यप्रमाणकत्वोपपत्तेः। न च राजपदोत्तरप्रथमाया निरर्थकत्वेऽपि राजाङ्गत्वं कर्तृत्वाद्यर्थकाख्यातरूपश्रुतिप्रमाणकमिति शङ्क्यम्। आख्यातस्य कर्तृत्वादिशक्ततायाः कर्त्रधिकरणे निरस्तत्वेन श्रुतित्वाभावात्। कर्तृप्रथमाख्यातयोरसंग्राह्यत्वे श्रुतिलक्षणे कर्तृत्वत्वसाधारणान्यतमत्वनिवेशवैफल्यमिति तु न वाच्यम्। कर्तृतृतीयायाः संग्राह्यत्वात्। न च तथा तस्यान्यलभ्यत्वेन कर्तृत्वकर्मत्वादिघटकीभूतकृतिफलादिवृत्तिधर्माणामेव तत्तद्विभक्तिशक्यतावच्छेदकत्वात्कर्तृत्वत्वादेः शक्यतानवच्छेदकत्वादसंभव इति वाच्यम्। शक्यतावच्छेदकीभूततत्तद्धर्मवृत्त्यन्यतमत्वघटितलक्षणस्यैव विवक्षितत्वात्कर्तृ-

१ ( अ० २ पा० १ अ० ४ )। २ ( अ० २ पा० १ अ० ४ सू० १२ )। ३ ( अ० १ पा० ३ अ० ९ )। ४ ( अ० ३ पा० ४ अ० ४ )।

त्वस्याखण्डोपाधिरूपत्वेन कर्तृत्वत्वादेरेव शक्यतावच्छेदकत्वादुक्तलक्षणेऽप्यदोषाच्च ।

ननु 'मैत्रावरुणाय दण्डं प्रयच्छति'[1] इत्यादौ मैत्रावरुणस्यैव भावनोद्देश्यस्य चतुर्थ्यर्थापित्वाद्दण्डस्यानीप्सितकर्मत्वेनैवान्वयावगतेरनीप्सितकर्मत्वार्थकदण्डपदोत्तरद्वितीयाया दण्डाङ्गत्वेऽप्रमाणत्वेन श्रुतित्वाभावात्तत्रोक्तलक्षणातिव्याप्तिः । ईप्सितानीप्सितसाधारणकर्मत्वत्वावच्छिन्न एव द्वितीयायाः शक्तेर्दण्डमिति द्वितीयायास्तदवच्छिन्नतात्पर्यकत्वाच्चेति चेन्न । व्याप्यव्याप्यस्य सुतरां व्याप्यत्वमिति न्यायेन मैत्रावरुणस्य भाव्यत्वावगतौ दण्डस्यापि कर्मत्वेनान्वये भावनाया एककर्मकत्वभङ्गापत्तेर्दण्डपदोत्तरद्वितीयायाः करणत्वे लक्षणाङ्गीकारे कर्मत्वत्वावच्छिन्नतात्पर्यकत्वाभावात् । अत एव सर्वत्रानीप्सितकर्मपदोत्तरद्वितीयायाः करणत्वे लक्षणा । सक्तूनित्यत्र विनियोगभङ्गसिद्धान्तोऽपि । अत एव द्वितीयायाः करणत्वपरत्वपर्यवसानम् । अनीप्सितकर्मत्वपरत्वपर्यवसाने इष्टस्यापि भाव्यत्वेन वाक्यभेदापत्तेः ।

किं च द्वितीयाया अनीप्सितकर्मत्वपरत्वे सक्तूनां होमाङ्गत्वे किं प्रमाणम् । न तावच्छ्रुतिः । द्वितीयाया होमाङ्गताप्रयोजककरणत्वशक्तत्वाभावात् । नापि वाक्यम् । उक्तकरणत्वलक्षकत्वाभावात् । न हि शक्त्या कर्मत्वत्वेन लक्षणया वाऽनीप्सितकर्मत्वत्वेनानीप्सितकर्मत्वोक्तिः सक्तूनां होमाङ्गत्वं गमयति । प्रमाणान्तरं तु होमाङ्गतायामसंभावितमेव । न च 'सोमेन यजेत' इत्यत्र मत्वर्थलक्षणापक्षे सोमनिष्ठकरणत्वस्य शक्त्या लक्षणया वा विभक्त्यनुक्तत्वेन श्रुतिवाक्ययोः सोमनिष्ठयागाङ्गतायां प्रमाणत्वासंभवेऽपि विशेषणविधिकल्पकल्पितश्रुतेरेव प्रमाणत्वमुपेयते, एवमिहापीति वाच्यम् । यजिपदसमभिव्याहाररूपतात्पर्यग्राहकबलेन सोमपदं सोमकरणके करणतासंबन्धेन सोमवति वा लक्षणाया यजिपदसमभिव्याहृतसोमपदरूपवाक्यस्यैव सोमनिष्ठयागाङ्गत्वे प्रमाणत्वात् । विशेषणविधेस्तु सोमकर्तव्यताबोध एव व्यापारात् । अत एवाङ्गत्वघटकीभूतकर्तृत्वाद्यन्यतमावगतिः श्रुतवाक्यात्, विध्यन्वयावगतिस्तु विशेषणविधितः । विशेषणविधौ हि सोमकरणकभावनाया विध्यन्वये स्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतावच्छेदकत्वसंबन्धेन विधिविशिष्टत्वरूपविध्यन्वयित्वावगतिः । करणत्वांशे तु सोमस्वरूपांश इव विशेषणविधिरनुवाद एव । प्रकृते तु सक्तूनामनीप्सितकर्मत्वेनान्वये होमाङ्गताप्रयोजकसक्तुनिष्ठकरणतायाः श्रुतवाक्यादनवगतेः । अत एव करणतावाचकपदघटितविशेषणविधिकल्पनायामपि मानाभावात्तस्यापि होमाङ्गत्वे प्रमाणत्वाभावान्निष्प्रमाणकमेव सक्तूनां होमाङ्गत्वम् । श्रुतविधौ हि कर्तृत्वाद्यन्यतमस्य यस्यावगतिस्तद्वाचकपदघटितविशेषणविधिः कल्प्यते । यथा 'सोमेन

१ (अ० ४ पा० २ अ० ६) । इत्यत्रोति शेषः । २ अदृष्टरूपस्येर्थः ।

यजेत ' इत्यत्र तृतीयान्तपदघटितः। ' अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति ' इत्यत्र ' पदे जुहोति ' इत्यत्र च सप्तम्यन्तपदघटितः, न तु सोमवाक्येऽधिकरणतावाचकपदघटितः पदवाक्ये[1] करणतावाचकपदघटितः। तथा सक्तुवाक्ये सक्तूनामनीप्सितकर्मत्वावगतौ तद्वाचकपदघटित एव विशेषणविधिः कल्प्येत न तु करणतावाचकपदघटित इति न तत्प्रमाणकत्वमङ्गत्वस्य। अतो द्वितीयायाः करणत्वलक्षणया वाक्यप्रमाणकहोमाङ्गत्व एव विनियोगभङ्गास्सिद्धान्तपर्यवसानमित्यवगच्छामः। अतोऽनीप्सितकर्मवाचकपदोत्तरद्वितीयायाः करणत्वपरत्वात्कर्मत्वत्वावच्छिन्नतात्पर्यकत्वाभावेन न श्रुतिलक्षणातिप्रसङ्गः। ' आचान्तेन कर्म कर्तव्यम् ' ' व्रीहीन्प्रोक्षति ' ' व्रीहिभिर्यजेत ' ' विप्राय गा ददाति ' ' उत्तरार्धात्स्विष्टकृते समवद्यति ' 'यदाहवनीये जुहोति' इत्यादीनि क्रमेण कर्तृत्वादिवाचकश्रुत्युदाहरणानि। ' गोदोहनेन पशुकामस्य प्रणयेत्' इत्यादौ षष्ठीश्रुत्या गोदोहनस्य पश्वङ्गत्वमिति षष्ठ्याः श्रुतित्वव्यवहारस्तु गौण इति ध्येयम्।

केचित्तु–अङ्गत्वप्रमाणान्तर्भूता श्रुतिस्त्रिविधा। विधात्री, अभिधात्री विनियोक्त्री चेति। विधात्री लिङादिश्रुतिः। अभिधात्री व्रीह्यादिश्रुतिः। विनियोक्त्री त्रिविधा। विभक्तिरूपा, समानपदरूपा, समानाभिधानरूपा च। एतत्सकलसाधारणस्य निरपेक्षो रवः श्रुतिरिति प्रवादस्य यच्छब्दज्ञानमन्यव्यवधानमनपेक्ष्य यदर्थज्ञानं जनयति सा तस्मिन्नर्थे श्रुतिरित्यर्थः। न च विनियोजकमानप्रस्तावे विधात्र्यभिधात्रीसाधारणलक्षणकथनं तन्निर्देशश्चासंगताविति शङ्क्यम्। विधिविनियोज्योपस्थापनेन विधिसहकारित्वस्य तयोरपि तुल्यत्वात्। शेषशेषित्वाभिमतयोस्तत्तद्रूपेणानुपस्थितयोः संबन्धबोधो व्यवधानमनपेक्ष्य यच्छब्दज्ञानेन जन्यते सा विनियोक्त्री। संबन्धश्चाङ्गत्वात्मना साधनत्वत्वात्मना संबधत्वात्मना वा प्रतीयताम्। न तद्विशेषो लक्षणे लक्ष्यते। तेन 'दीक्षिष्यमाणः ' इत्यादौ लटः, तृतीयाषष्ठीपदश्रुतीनां च संग्रह इत्याहुः।

तदतीव मन्दम्। शक्तत्वरूपाभिधात्रीत्वस्योक्तश्रुतित्वव्यापकतया तदवच्छिन्नविभाजकोपाधित्वानुपपत्तेः। न च समानपदश्रुतेर्यजेतेत्यादिरूपाया यागभावनयोः संबन्धरूपार्थे श्रुतित्वेन तत्र च शक्तत्वरूपाभिधात्रीत्वाभावान्न तस्य श्रुतित्वव्यापकत्वमिति वाच्यम्। तथाऽपि श्रुतिविभाजकोपाध्यन्तरसमानाधिकरणत्वेनाभिधात्रीत्वस्य तद्विभाजकोपाधित्वासंभवात्समानपदश्रुत्या शेषशेषिणोः सबन्धरूपार्थज्ञाने जननीये स्वघटकपदार्थज्ञानस्यापेक्षणीयत्वेन त्वदुक्तश्रुतित्वस्य समानपदश्रुतावभावेनाभिधात्रीत्वस्योक्तव्यापकत्वस्यापि सुवचत्वात्। अत एव श्रुतिलक्षणस्य समानपदश्रुतावव्याप्तेस्तस्या

---

[1] ' पदे जुहोति ' इत्यस्मिन्वाक्य इत्यर्थः।

ष्ठ्यत्वकथनमप्यसंगतम् । न च पदार्थोपस्थित्यतिरिक्तव्यवधायकानपेक्षत्वमुक्तलक्षणघटकमिति नाव्याप्तिरिति वाच्यम् । ' उच्चैर्ऋचा क्रियते ' इत्यादौ संसर्गमर्यादया भासमानशेषशेषिसंबन्धके वाक्येऽतिव्याप्तेः । किं च सक्तूनित्यत्र प्राथमिकद्वितीयाज्ञानेन करणत्वज्ञाने जननीये शक्योपस्थितिलक्षणज्ञानादिरूपव्यवधायकापेक्षणेऽपि करणत्वं शक्यसंबन्धेन द्वितीयावदिति ज्ञानेन करणत्वज्ञाने जननीये व्यवधायकान्तरानपेक्षणाद्द्वितीयायाः करणत्वे श्रुतित्वापत्तिः । अनपेक्षान्तवैयर्थ्याच्च । यच्छक्त्या पदार्थज्ञानं जनयति, यद्यत्र शक्तं तत्तत्र श्रुतिरित्यस्यैव सुवचत्वात् ।

अपि च श्रौताङ्गत्वव्यवहारविषयीभूतश्रुतित्वस्य विधाऽयमिधात्रीसाधारणे ' सक्तून् जुहोति ' ' धेनुर्दक्षिणा ' इत्यादौ वाक्यीयाङ्गत्वबोधेऽपि विधिविनियोज्योपस्थापनेन विधिप्रातिपदिकरूपविधाऽयभिधाऽयोः सहकारितयाऽङ्गत्वप्रमाणतावच्छेदकं श्रुतित्वं विधिप्रातिपदिकादिव्यावृत्तमेव वाच्यम् । एवं विनियोक्त्रीलक्षणे समानाभिधानसमानपदश्रुतिसंग्रहाय स्वघटकपदार्थोपस्थितिभिन्नत्व व्यवधाने विशेषणमावश्यकम् । तथा च संसर्गमर्यादया भासमानशेषशेषिसंबन्धके ' धेनुर्दक्षिणा ' इत्यादिवाक्येऽतिव्याप्तिः । ' सक्तून् जुहोति ' इत्यत्र करणत्व द्वितीयालक्ष्यमिति द्वितीयाज्ञानेन व्यवधानमनपेक्ष्य करणत्वरूपसंबन्धबोधाद्द्वितीयादेर्विनियोजकश्रुतित्वापत्तिश्चेति न किंचिदेतत् । अतः समानाभिधानसमानपदश्रुत्यादिषु श्रुतित्वव्यवहारस्य गौणत्वमङ्गीकृत्य कारकविभक्त्यसाधारणमस्मदुक्तलक्षणमेवोचितमित्यलं पल्लवितेन ॥

( इति—श्रुतिनिरूपणम् । )

====

## ॥ अथ लिङ्गं निरूप्यते ॥

सामर्थ्यं लिङ्गमिति प्राञ्चः । तदुक्तम्—सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते, इति । नव्यास्तु—अङ्गत्वघटकीभूतोद्देश्यताकृतिकारकत्वयोरन्यतरवाचकपदकल्पनानुकूलाक्लृप्तपदार्थनिष्ठयोग्यता लिङ्गम् । यथा ' स्रुवेणावद्यति ' इत्यत्र द्रवद्रव्यमित्युद्देश्यतावाचिपदकल्पनानुकूलस्रुवकरणकावदाननिष्ठयोग्यता लिङ्गम् । यथा वा ' अध्वर्युं वृणीते ' इत्यादिसंस्कारविध्यन्यथानुपपत्त्या वृतेनाध्वर्युणा यच्छक्नुयात्तत्कुर्यादिति संस्कार्यविनियोगकल्पनास्थले करणत्ववाचितृतीयाद्यन्तपदकल्पनानुकूलक्लृप्तसंस्कारनिष्ठयोग्यता । ' बर्हिर्देवसदनं दामि ' इत्यादिमन्त्रेष्वप्यनेन मन्त्रेण बर्हिर्लवनं प्रकाशयेदित्यादिस्वप्रतिपाद्यार्थस्मृत्युद्देश्यतास्ववृत्तिकरणतादिवाचकपदकल्पनानुकूलयोग्यता लिङ्गम् । तच्च तत्त-

त्पदरूपश्रुतिकल्पनाद्वारा तत्तत्पदार्थं प्रति तत्तत्पदार्थस्याङ्गत्वे प्रमाणमित्याहुः। मृदादौ घटाद्यनुकूलाया यागादौ स्वर्गाद्यनुकूलायाश्च योग्यताया वारणायानुकूलान्तम्।

तत्र कृतिकारकत्वपदं श्रुतिलक्षण इव कृत्यन्वितकर्तृत्वाद्यन्यतमपरम्। 'स्रुवेणावद्यति' इत्यत्रोद्देश्यतावाचकपदस्यैव कल्पनेन स्रुवकरणकावदाननिष्ठयोग्यतायाः कर्तृत्वाद्यन्यतमवाचकपदकल्पनानुकूलत्वाभावादव्याप्तिरतः परोद्देश्यतानिवेशः। कृतिकारकत्वादिनिवेशे प्रयोजनं तु यत्र संस्कारवि-यन्यथानुपपत्त्या संस्कार्यस्य क्लृप्तशेषिवाक्य एव तृतीयाद्यन्तपदकल्पनया विनियोगो न तूद्देश्यविधेयवाचकपदघटितसमस्तवाक्यकल्पनं यथा 'यदि सोमं न विन्देत पूतीकानभिषुणुयात्' इत्यादौ पूतीकानामभिषवसंस्कार्यत्वान्यथानुपपत्त्या 'सोमेन यजेत' इत्युत्पत्तिवाक्य एव सोमाभावे पूतीकैरिति तृतीयाद्यन्तपदकल्पनम्। तत्र संस्कारनिष्ठयोग्यतायामुद्देश्यतावाचकपदकल्पनानुकूलत्वाभावेनाव्याप्तिवारणम्। विकृतिनिष्ठप्रकृतिसादृश्ये प्रकृतिसंनिधिमरङ्कै विकृतिमुपकुर्यादित्युद्देश्यताकृतिकारकतान्यतरवाचकपदकल्पनानुकूलत्वादतिव्याप्तिवारणाय योग्यतेति।

अत्र पूर्वोक्तन्यायेनोद्देश्यताकर्तृत्वाद्यन्यतमान्यतरत्वस्य गुरुत्वात्कर्तृत्वकर्मत्वकरणत्वसंप्रदानत्वापादानत्वाधिकरणत्वान्यतमवाचकपदकल्पनानुकूलयोग्यतात्वस्यैव प्रकृतलक्षणतात्पर्यम्। अथ 'सोमेन यजेत' इत्यादिविशिष्टविध्यन्यथानुपपत्तिप्रसूतविशेषणविधिकल्पनानुकूलयोग्यतायामतिप्रसक्तिर्दुर्वारा। न हि सोमादौ लैङ्गिकमङ्गत्वं केनापि व्यवह्रियत इति चेन्न। यतः सोमाद्यङ्गत्वस्य लिङ्गप्रमाणकत्वेऽपि सोमादिपदे मत्वर्थलक्षणापक्षे सोमे वाक्यीयमङ्गत्वम्। सोमकरणत्वस्य परम्परया भावनान्वयवादिनव्यानां मते तु 'प्राबल्येन व्यपदेशा भवन्ति' इति न्यायेन वाक्यीयाङ्गत्वस्य श्रौताङ्गत्वस्यैव वा व्यवहारो न तु लैङ्गिकाङ्गत्वस्य, 'यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्या' इत्यादौ ब्राह्मणवाक्यस्यापि लिङ्गतः प्राबल्यावगमादिति। 'प्रयाजशेषेण हवींष्यभिघारयति' इत्यत्र हविरुद्देशेन प्रयाजशेषकरणकाभिघारणविधिमभ्युपेत्याऽऽर्थिककल्पनावता प्रयाजशेषोद्देशेनाभिघारणरूपप्रतिपत्तिविधिमभ्युपगच्छता नये, आर्थिकविधिकल्पनानुकूलयोग्यतायामतिव्याप्तिः किन्तु तत्र लैङ्गिकाङ्गत्व इष्टापत्त्यैवानाशङ्क्या। न च तत्र प्रयाजशेषप्रतिपत्त्याकाङ्क्षयैव प्रतिपत्तिविधेः कल्पनात्तस्य लिङ्गकल्प्यत्वाभावेन लैङ्गिकाङ्गत्वाभावः। अभिघारणनिष्ठयोग्यतया विधिकल्पनायामाकाङ्क्षायाः सहकारित्वेन लिङ्गस्यैव तत्राभिघारणनिष्ठप्रयाजशेषाङ्गतायां प्रमाणत्वात्। तत्राऽऽकाङ्क्षायाः प्रमाणत्वेऽङ्गत्वप्रमाणविभागव्याकोपात्पाके समर्थस्यापि देवदत्तस्य पाकाकाङ्क्षाभावे पाके विनियोगादर्शनेनाऽऽकाङ्क्षां विना लिङ्गस्य क्वाप्यविनियोजकत्वात्सर्वत्राऽऽकाङ्क्षाया एवाङ्गत्वप्रमाणत्वापत्तौ लिङ्गप्रामाण्यानापत्तेश्च।

अथ श्रुतविधिना प्रयाजशेषकरणकाभिघारणस्य हविरुद्देशेन विधावभिघारणे प्रयाजशेषस्य विनियुक्तत्वेन प्रतिपत्त्याकाङ्क्षाया अभावादार्थिकविधिकल्पनानुपपत्तिः । न च यथा ' उत्तरार्धात्स्विष्टकृते समवद्यति ' इत्यत्रोत्तरार्धस्यापादानतया गुणत्वेन विनियुक्तस्याप्यार्थिकविधिकल्पनया प्रतिपाद्यत्वं तथेहापीति वाच्यम् । तत्र त्यागांशं प्रति विनियुक्तस्याप्युत्तरार्धस्य प्रक्षेपांशीयप्रयोजनाकाङ्क्षयाऽऽर्थिकविधिकल्पनया प्रक्षेपांशं प्रति प्रतिपाद्यत्वोपपत्तावपि प्रकृतेऽशभेदाभावेन तदनुपपत्तेः ।

एतेन ' मैत्रावरुणाय दण्डं प्रयच्छति ' इत्यत्र दण्डकरणकदानस्य मैत्रावरुणोद्देशेन विधिरिति सिद्धान्ते दीक्षितदण्डस्य दीक्षाभिव्यञ्जकालम्बनोपयुक्तस्य दानेऽपि विनियोगात् ... दण्टान्तरप्रयोजकशक्तिकल्पनागौरवपरिहारायाऽऽर्थिकदानप्रतिपत्तिकल्पनया दण्डस्य दानप्रतिपाद्यत्वम् । ... कार्यसङ्कोचकत्वस्य कृष्णविषाणास्थले ... दीक्षितदण्ड... सिद्धिरिति नव्यैरुक्तम् । तथेहाभिघारणे विनियुक्तस्य श्रुतविधिना ... शक्तिकल्पनागौरवपरिहारायोत्थाप्यप्रतिपत्त्याकाङ्क्षयाऽऽर्थिकप्रतिपत्तिविधिं कल्पयित्वा प्रतिपाद्यत्वमस्तु, ' दोषो नानुमिते ह्यसौ ' इति न्यायेनाऽऽर्थिके प्रतिपत्तिविधौ ... प्रयोजकत्वशक्तिकल्पनस्यादोषत्वादिति निरस्तम् । तत्र ... मात्रेणैव मैत्रावरुणोपकारसिद्धेस्त्यागांशेन दण्डप्रतिपत्त्यर्थताया ... असंभवात् ।

... श्रुतविधिनाऽभिघारणविधौ विशेषणविधेरावश्यकत्वात्तस्यैव धारणाक्षेपशक्तिकल्पनोपपत्तौ न श्रुतविधौ तत्कल्पनप्रयुक्तगौरवावकाशः । मैत्रावरुणायेत्यत्र तु न ... कल्पनं लघीय इति वैषम्यम् । तैत्तिरीयशाखायां ' यद्दीक्षितदण्डं प्रयच्छति ' इति प्रतिपत्तिविधेः श्रुतत्वेन तत्र तदकल्पनाच्चेति चेन्न । श्रुतविधौ प्रयाजशेषकरणकस्य ... यागार्थताबोधस्योत्तरकालीनविशेषणविध्यधीनत्वासत्त्व, पूर्वं प्रयाजशेषीयप्रतिपत्त्याकाङ्क्षाया अनिवृत्तेर्विशेषणविधेरिव प्रतिपत्तिविधेरपि प्रतिपत्त्याकाङ्क्षा... लिङ्गरूपसामग्रीसत्त्वेन कल्पनोपपत्तेः । न चैवं विशेषणविधेरपि कल्प्यत्वाविशेषेण विनिगमनाविरहाद्धारणाक्षेपशक्तिकल्पनापत्तेर्दर्शे हृदयाद्यभिघारणार्थे ... प्राजापत्यवपाभिघारणार्थं च शेषस्य धारणीयत्वापत्तिः । तथा च प्रतिपत्तेरेव धारणप्रयोजकत्वोपगमेन सन्निहितहविःषु च शेषसमापनोक्तिश्चतुर्थोक्ता विरुध्येतेति वाच्यम् । कालान्तरीयहविरभिघारणार्थं पात्रान्तरोत्पादनगौरवस्यैव विनिगमकत्वेन प्रतिपत्तिविधेरेव धारणाक्षेपशक्तिकल्पनेनाविरोध इत्याशयेन नव्यमतभव्यतासंभवात् ।

---

१ ( अ० ४ पा० १ अ० १४ ) इत्यत्रेति शेष. ।

इदं च लिङ्गं द्विविधम् । सामान्यसंबन्धबोधकप्रमाणसापेक्षं तदनपेक्षं चेति । स्वप्रमेयोद्देश्यतावच्छेदकव्यापकधर्मावच्छिन्ननिरूपितस्वप्रमेयाङ्गतानिष्ठसंबन्धबोधकप्रमाणसापेक्षत्वं सामान्यसंबन्धबोधकप्रमाणसापेक्षत्वम् । अस्ति चेदं 'बर्हिर्देवसदनं दामि' इत्यादिमन्त्रलिङ्गे । अत्र मन्त्रलिङ्गकल्प्यश्रुतौ न लवनत्वेन लवनस्योद्देश्यता । विनाऽपि मन्त्रं प्रकारान्तरेण स्मृत्वा लवनसंभवेनाऽऽनर्थक्यात् । अपि त्वपूर्वीयलवनत्वेन । न च तेन रूपेण मन्त्राद्बोधः संभवति । तस्य लवनत्वमात्रेण बोधकत्वात् । न चापूर्वीयलवनत्वेन बोधं विनाऽनेन मन्त्रेणापूर्वीयलवनं प्रकाशयेदिति निरुक्तोद्देश्यतावच्छेदकावच्छिन्नवाचकपदघटितश्रुतिकल्पनं संभवति । अतोऽपूर्वीयलवनत्वेन बोधार्थं प्रकरणादिरूपप्रमाणान्तरमपेक्षणीयम् । तत्र दर्शपूर्णमासप्रकरणेऽस्य मन्त्रस्य पाठाद्दर्शपूर्णमाससंबन्धि किंचिदनेन प्रकाशयेदित्यवगते किं तदित्यपेक्षायां लवनमिति मन्त्रलिङ्गतोऽवगम्यते । अतो मन्त्रलिङ्गप्रमेयदर्शपूर्णमासापूर्वसंबन्धिलवनत्वव्यापकदर्शपूर्णमासापूर्वसंबन्धित्वावच्छिन्ननिरूपितमन्त्रनिष्ठसंबन्धबोधकप्रमाणसापेक्षत्वादस्य लिङ्गस्य सामान्यसंबन्धबोधकप्रमाणसापेक्षत्वम् । एवं पूषानुमन्त्रणमन्त्रं यागानुमन्त्रणमिति समाख्यया यागसामान्यापूर्वसंबन्धि किंचिदनेन मन्त्रेण प्रकाशयेदित्यवगते किं तदित्यपेक्षायां पूषेति मन्त्रलिङ्गादवगम्यते । अतो लिङ्गप्रमेयपूषनिष्ठविजातीययागापूर्वसाधनत्वरूपोद्देश्यतावच्छेदकव्यापकयागसामान्यापूर्वसाधनत्वावच्छिन्ननिरूपितमन्त्रनिष्ठसंबन्धबोधकसमाख्यासापेक्षत्वाल्लिङ्गस्य निरुक्तप्रमाणसापेक्षत्वम् । यत्र तूद्देश्यस्वरूप आनर्थक्याभावेनापूर्वसाधनत्वादिबोधार्थं न प्रकरणाद्यपेक्षा । यथा, अर्थज्ञानस्य सामर्थ्यात्कर्मानुष्ठानाङ्गत्वे । तत्र लिङ्गस्य सामान्यसंबन्धबोधकप्रमाणानपेक्षत्वम् ।

लिङ्गस्य चाशब्दत्वेनाविधायकत्वाद्विहितत्वघटितनिरुक्ताङ्गत्वे साक्षात्प्रमाणत्वासंभवेन विधायकश्रुतिकल्पनान्तरितप्रामाण्यस्यानन्तरितप्रामाण्यश्रुतितो दौर्बल्यम् । अत एव 'कदाचन स्तरीरसि' इतीन्द्रप्रकाशिकाया ऋचो यावल्लिङ्गादिन्द्रोपस्थानार्थत्वं कल्प्यते तावत् 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति श्रुत्या गार्हपत्योपस्थानार्थत्वमैन्द्र्यधिकरणे निरूपितम् । न चोपक्रमस्थतद्धितश्रुत्येन्द्राङ्गत्वावगमान्न गार्हपत्योपस्थानाङ्गत्वमिति वाच्यम् । लाघवात्स्यज्यमानद्रव्योद्देश्यत्वसमनियताखण्डोपाधिरूपदेवतात्वशक्तस्य तद्धितस्य प्राधान्येन प्रतिपाद्यत्वरूपसखण्डोपाधिरूपदेवतात्वे लक्षणाङ्गीकारेण प्रकृते तद्धितस्य श्रुतित्वाभावादिन्द्रोद्देशेन विधाने प्रसरताभङ्गापत्तेश्च । चयनप्रकरणपठितेनैन्द्र्येति वचनेन चयनानुपयोगीन्द्रप्रकाशकत्वेन विधानानुपपत्तेश्च । गार्हपत्यस्य तु साधनत्वेन चयनसंबन्धित्वेऽपि चयनसंस्कारार्थत्वोपपत्तिः । अतश्च शक्त्योपस्थितेन्द्रप्रकाशकत्वमा-

---

१ (अ० ३ पा० २ अ० २)।

दायैन्द्येति संज्ञामुपपाद्य गौणसामर्थ्यसहकृततृतीयाश्रुत्या गार्हपत्यप्रकाशकत्वमेवास्या ऋच इति ध्येयम् । मुख्यसामर्थ्यरूपलिङ्गविरोधिगौणसामर्थ्यस्य श्रुतिसहायत्वेऽपि न स्वतो विनियोजकत्वम् । अत एव दर्शपूर्णमासप्रकरणपठितस्य 'बर्हिर्देवसदनं दामि' इति मन्त्रस्य शक्त्या बर्हिर्लवनाङ्गत्वं न तु गौण्योलपराजिलवनाङ्गत्वमित्युक्तं तृतीये ॥

( इति– लिङ्गनिरूपणम् । )

=====

॥ अथ वाक्यं निरूप्यते ॥

———

पदसमभिव्याहारो वाक्यम् । यथा 'धेनुर्दक्षिणा' 'उच्चैर्ऋचा क्रियते' इत्यादौ । 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इत्यादिश्रुतिस्थले पदसमभिव्याहाररूपवाक्यसत्त्वेऽपि 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायेन श्रौताङ्गत्वस्यैव व्यवहारो न तु वाक्यीयाङ्गत्वस्येति प्राञ्चः । नव्यास्तु, अङ्गत्वघटकीभूतपरोद्देश्यताकृतिकारकत्वान्यतरपदार्थकल्पनानुकूलः श्रुतपदसंनिधिः । कल्पनाशब्देन च सांसर्गिकविषयताशालिशाब्दबोधलक्षणाजन्यशाब्दबोधान्यतरद्विवक्षितम् । अत. संसर्गविधया भासमानकरणताकस्य 'धेनुर्दक्षिणा' 'उच्चैर्ऋचा क्रियते' इत्यादे., लक्षणया भासमानकर्मत्वस्य 'प्रयाजशेषेण हवींष्यभिघारयति' 'सक्तून् जुहोति' इत्यादेश्च संग्रहः । श्रुतिघटितपदसंनिधेरङ्गत्वघटकीभूतपरोद्देश्यताकृतिकारकत्वान्यतरनिरूपितसांसर्गिकविषयताशालिशाब्दबोधलक्षणाजन्यशाब्दबोधान्यतररूपनिरुक्तकल्पनानुकूलत्वाभावान्नातिव्याप्तिरित्याहुः । पूर्ववदङ्गत्वैकदेशबोधप्रयोजकत्वेनाङ्गत्वप्रमाणत्वसूचनायाङ्गत्वघटकीभूतेति, न त्वङ्गत्वघटकत्वस्य लक्षणे निवेशः । प्रयोजनाभावात् । परोद्देश्यताकृतिकारकत्वपदेन च कर्तृत्वकर्मत्वकरणत्वसंप्रदानत्वापादानत्वाधिकरणत्वान्यतम विवक्षितम् । संसर्गमर्यादया भासमानकरणताके लिङ्गकल्पितवाक्येऽतिव्याप्तिवारणाय श्रुतेति । कर्तृत्वाद्यन्यतमशक्तिज्ञानाजन्यकर्तृत्वाद्यन्यतमशाब्दबोधप्रयोजकपदसमभिव्याहारो वाक्यमिति तु ज्यायः ।

नीलो घट इत्यादिसमभिव्याहारवारणाय प्रयोजकान्तम् । श्रुतिस्थलीयपदसमभिव्याहारवारणायाजन्यान्तं शाब्दबोधविशेषणम् । 'धेनुर्दक्षिणा' इत्यादिपदसमभिव्याहारप्रयोज्यशाब्दबोधस्य धेन्वादिशक्तिज्ञानजन्यत्वात्प्रथमतः कर्तृत्वाद्यन्यतमेति । नीलो घट इत्यादिपदसमभिव्याहारवारणाय द्वितीयं कर्तृत्वाद्यन्यतमेति । निरुक्तशाब्दबोध-

प्रयोजकत्वं निरुक्तशाब्दबोधानुकूलाकाङ्क्षायोग्यतादिमत्त्वम् । तेन करणत्वादावगृहीततृतीयादिशक्तिकस्य विपरीतव्युत्पन्नस्य 'व्रीहिभिर्यजेत' इत्यादिश्रुतिस्थलीयपदसमभिव्याहारात्कर्तृत्वाद्यन्यतमसंसर्गकव्रीह्यादिप्रकारकयागादिविशेष्यकशाब्दबोधेऽपि नातिव्याप्तिरिति ध्येयम् ।

नन्वेवम् 'औदुम्बरो यूपो भवति' इत्यादौ वाक्योदाहरणत्वासत्त्वादौदुम्बरताया वाक्यीययूपाङ्गत्वमुपेक्ष्य 'पशूनाप्नोति' इति द्वितीयादिश्रुतिप्रमाणकपश्वङ्गत्वस्यैवोचितत्वादौदुम्बराधिकरणसाधितयूपाङ्गत्वविरोधः । अत एव सन्निध्यनुग्रहादपि न वाक्यीययूपाङ्गत्वाङ्गीकार इति चेन्न । यूपकर्तृकभवनाक्षिप्ताया भावनाया यूपेतरस्य कर्मत्वेनान्वेतुमयोग्यत्वात्, आश्रयालाभेन च श्रौतपश्वङ्गत्वायोगात्तत्र वाक्यीययूपाङ्गत्वस्वीकारात् । न च 'सोमापौष्णं त्रैतमालभेत पशुकामः' इति प्रकृतस्य त्रिवर्षपशुसाध्यस्य यागस्यौदुम्बराश्रयत्वं संभवति । न च स्वमानद्रव्यपरिच्छेदद्वारकाश्रयत्वासंभवेऽपि, अतिदेशप्राप्तपशुनियोजनाङ्गयूपपरिच्छेदद्वारकाश्रयत्वमेव । यूपस्येव जुह्वादीनामातिदेशप्राप्तत्वेन तत्परिच्छेदस्यापि द्वारतापत्तौ यूपानुवादानुपपत्तेः । अत एवाऽऽतिदेशिकपशुनियोजन यूपद्वाराऽऽश्रय इत्यपि न ।

अथ 'यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या' इत्यत्रावदानानुवादेन पञ्चत्वविधिमङ्गीकृत्य हृदयाद्यवदानेऽपि पञ्चत्वसिद्धिः सिद्धान्तिता दशमे । वपापदमवयुत्यानुवाद उपलक्षणं वा सत्सर्वानुवादः । तथाऽत्रापि यूपपदमवयुत्यानुवाद उपलक्षणं वा स्यादिति चेन्न । तत्र हि हृदयादिषु पञ्चावदानाभावे चतुरवदानघटकद्व्यवदानस्यातिदेशादेव प्राप्तेः 'एकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यति' इत्यस्य वैयर्थ्यापत्त्याऽवदानस्य निरुक्तानुवादत्वस्वीकारः । तदा हि, अवदानमात्रोद्देशेन पञ्चत्वविधौ हृदयाद्यवदानेष्वपि पञ्चत्वप्राप्तेर्हविष्कृद्यवदानप्राप्तौ द्व्यवदानविधिस्तदभावबोधकत्वेन सार्थकः । न च हृदयादिष्वपि जामदग्न्यादीनां पञ्चावदानस्य तिदेशादेव प्राप्तेस्तेषां हविष्कृद्यवदानप्राप्तौ द्व्यवदानविधिः सार्थक इति नव्योक्तं युक्तमिति वाच्यम् । तथाऽपि विधेः पाक्षिकफलत्वमुपेक्ष्य वपापदस्यैकस्यैव पाक्षिकानुवादत्वौचित्यात् । प्रकृते तु न कस्यापि वैयर्थ्यादिकमिति किमिति यूपपदस्य पाक्षिकानुवादत्वाङ्गीकारः ।

इदं च प्राचीनाभ्युपेतवाक्यार्थानुसारेणोक्तम् । वस्तुतस्तु, अवदानोद्देशेन पञ्चत्वविधौ हृदयादिवाक्यैर्हृदयाद्येकादशेतराङ्गेष्ववदानस्य परिसंख्यातत्वाद्वपायामवदानस्यैवाभावे पञ्चत्वप्रसक्त्यभावाद्वपानुवादानुपपत्तेरेकप्रसरताभङ्गापत्तेश्च नायं वाक्यार्थः समञ्जसः । किं तु पञ्चत्वविशिष्टावदानान्तरस्यातिदेशतः पूर्वप्रवृत्त्या पञ्चत्वविशिष्टप्रा-

१ ( अ० १ पा० २ अ० ३ ) । २ ( अ० १० पा० ७ अ० १८ ) इत्यत्रेति शेषः ।

कृतावदानस्य वा वपोद्देशेन विधिस्तस्यैवोपस्थितत्वात् । हृदयादिवाक्ये हृदयाद्युद्देशेन विधिरिति हृदयादिषु तदङ्गपञ्चत्वप्राप्तिरिति नव्यमताश्रयणे न वपापदस्यावयुत्यानुवादत्वादिप्रसक्तिः । परं तु नव्यमतेऽवदानविधिसमकालप्रवृत्ताना हृदयाद्यवदानविधीना तदुत्तरप्रवृत्तौ द्व्यवदानविधिपाक्षिकफलकत्वापत्त्यतिरिक्तप्रबलप्रमाणं न पश्यामः ।

किं च पञ्चत्वविशिष्टावदानान्तरस्य वपोद्देशेन विधाववदानोद्देशेन पञ्चत्वविशेषणविधिकल्पनायामवदानस्वरूप आनर्थक्यप्राप्तौ वपाभ्यासापूर्वसाधनत्वलक्षणाया आवश्यकत्वाद्धृदयाद्यवदानेषु कथं पञ्चत्वप्राप्तिः । न ह्यभ्यासविशेषधर्मस्याभ्यासान्तरे प्राप्तिः संभवति । उपदेशस्याभ्यासविशेषविषयत्वात्, अतिदेशस्याभ्यासयोः प्रकृतिविकारभावाभावेनासंभवात् । पञ्चत्वविशिष्टप्राकृतावदानस्यैव वपोद्देशेन विधौ तु प्रकृतविधेरेव वपाभ्यासापूर्वसाधनीभूतावदाने पञ्चत्वविधौ तात्पर्यान्नावदानान्तरे पञ्चत्वविधिः संभवतीति तदधिकरणसिद्धान्ताश्चिन्त्य एवेति न वपापददृष्टान्तेन यूपपदस्यावयुत्यानुवादत्वादीति । अतश्चाऽऽश्रयालाभान्न पशूद्देशेनौदुम्बरत्वविधिः संभवतीति वाक्याद्यूपाङ्गत्वमेवौदुम्बरतायाः । न च प्रकारान्तरेणाऽऽश्रयालाभेऽपि प्रकृतवाक्य एवौदुम्बरत्वकरणकपशुकर्मकयूपाश्रयकभावनाविधानाद्यूपात्मकौदुम्बरत्वाश्रयलाभः । आश्रयत्वस्य साध्यत्वातिरिक्तस्य दुर्वचत्वेन भावनाया अनेककर्मकत्वाद्वाक्यभेदापत्तेः ।

यत्तु राणके[1] 'अतिदेशप्राप्तस्य पशुनियोजनस्य यूपद्वाराऽऽश्रयत्वमाशङ्क्य प्रकृतौ हि प्रत्यक्षोपदिष्टस्य होमप्रणयनादेः पश्चात्साधनापेक्षाया पयश्चमसादिवत्फलार्थस्यापि गोदोहनादेराश्रयीभूतसाध्यापेक्षादर्शनादुभयाकाङ्क्षावशात्साधनत्वमवसीयते । न चैतावताऽङ्गत्वप्रसङ्गः । तादर्थ्येन विधानाभावात् । अत एव गुणकामप्रयोगे प्रासङ्गिकोपकारिणा गोदोहनादिना कार्यसिद्धौ चमसादेरनङ्गत्वेन तदभावे वैगुण्याभावः । विकृतौ त्वखण्डकरणोपकारमुखेन अलब्धोपकारप्राकृतखादिरत्वादिविशिष्टस्यैव पशुनियोजनस्यातिदेशात्साधनानाकाङ्क्षस्य परार्थविहितसाधनान्तरग्राहकत्वं न युक्तम् । अन्यतराकाङ्क्षाहेतुकस्य सम्बन्धस्येतराकाङ्क्षोद्भावनपूर्वकत्वाद्विधिमन्तरेण चाऽऽकाङ्क्षानुत्थापनात्' इति परिहृतम् । तच्चिन्त्यम् । प्रणयनस्य श्रुत्यवगताङ्गताकचमसेन निराकाङ्क्षतया गोदोहनाश्रयत्वस्योभयाकाङ्क्षालभ्यत्वासंभवाद्गोदोहनादेः फलसाधनताबोधनसमकालमेव हि प्रणयने चमससाध्यत्वबोधः, तदैव प्रणयनस्य नैराकाङ्क्ष्यं गोदोहने फलसाधनत्वान्यथानुपपत्तिमूलकाकाङ्क्षाबललभ्यः, प्रणयने गोदोहनसाध्यत्वबोधस्तु तदुत्तरकालीन इति सर्वतो बलवती ह्यन्यथानुपपत्तिरिति न्यायेन गोदोहनीय

---

1 राणकापरनामधेयन्यायसुधायामौदुम्बराधिकरणे (अ० १ पा० २ अ० २ सू० २२) इत्यत्र भट्टसोमेश्वरोक्तमनुवदति—यत्तु राणक इत्यादिना ।

फलसाधनत्वान्यथानुपपत्त्या निराकाङ्क्षस्यापि प्रणयनस्याऽऽकाङ्क्षामुत्थाप्य गोदोहनाश्रयत्वाङ्गीकारः। काम्यं नित्यस्य बाधकमिति न्यायेन काम्यप्रयोगे चमसस्यानङ्गत्वम्। इत्थमेव चोत्पत्तिशिष्टसोमेन निराकाङ्क्षस्यापि ज्योतिष्टोमस्य फलोद्देशेन विधीयमानोऽद्रिद्गुणाश्रयत्वमुद्भिदधिकरणे पूर्वपक्षाद्युक्तं संगच्छते। अत एव प्रबलप्रमाणावगतसाधनान्तरावरुद्धक्रियायाः फलार्थगुणाश्रयत्वं स्थानप्रमाणकमेव। दध्याद्याश्रयत्वस्य प्राकरणिकत्वव्यवहारस्तु संनिधिपाठनिबन्धनः। अतः प्राकृतखादिरत्वावरुद्धेऽपि यूपे, औदुम्बरतानिवेशसंभवादाश्रयत्वं संभवत्येवेत्यस्मदुक्तरीत्यैवाऽऽश्रयत्वखण्डनमित्यलमनया प्रासङ्गिकचिन्तया।

न च 'धेनुर्दक्षिणा' 'उच्चैर्ऋचा क्रियते' 'सह श्रपयति' इत्यादिषु यथाक्रमं दक्षिणोद्देशेनाभेदसंबन्धेन धेनोः, ऋग्वेदविहितकर्मोद्देशेन मन्त्रघटितपरम्परासंबन्धेनोच्चैष्ट्वस्य, श्रपणोद्देशेन स्वरूपसंबन्धेन साहित्यस्य च विधेयत्वात्कर्तृत्वाद्यन्यतमत्वस्य शाब्दबोधाविषयत्वेनाव्याप्तिरिति वाच्यम्। वस्तुतो धेन्वादीनां करणत्वेन भावनान्वयस्यैव तत्तदुदाहरणे विवक्षितत्वात्। तथा हि। 'धेनुर्दक्षिणा' इत्यत्र तावत्सुबन्तयोः परस्परान्वयाभावात्। 'न हि क्रियारहितं वाक्यमस्ति' इति न्यायेन क्रियापदाध्याहार आवश्यकः। तत्र च भावनाया भाव्यापेक्षाया दक्षिणापदस्य दक्षिणाकार्यपरतया भाव्यसमर्पकत्वम्। करणाकाङ्क्षाया च करणतासंसर्गेण धेनुपदार्थस्य धेनुपदोत्तरप्रथमाया वा करणत्वलक्षणया धेनुकरणत्वस्य भावनायामन्वयः। धेनुदक्षिणयोरभेदबोधस्तु पार्ष्ठिकः। धेनुत्वैकत्वयोर्विधाने वाक्यभेदस्तु विशिष्टकरणविधानादनाशङ्क्यः।

एवम् 'उच्चैर्ऋचा क्रियते' इत्यत्र वेदोपक्रमानुरोधाद्धातुना, ऋग्वेदविहितकर्मलक्षणात्तस्य च प्राप्तत्वेन भावनायामुद्देश्यत्वेनान्वये जाते करणाकाङ्क्षायामुच्चैष्ट्वस्य मन्त्रघटितपरम्परासंबन्धावच्छिन्नकरणतासंसर्गेण भावनान्वयः। न तु मन्त्रघटितपरम्परासंबन्धमात्रेण। तथात्वे भावनायाः करणाकाङ्क्षोपशान्त्यभावात्। एवं 'सह श्रपयति' इत्यत्रापि प्रमाणान्तरप्राप्तश्रपणोद्देश्यकभावनाया साहित्यस्य कर्तृत्वाद्यन्यतमसंसर्गेणैवान्वयः। तथा हि। दर्शपूर्णमासयोः 'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्स त्रेधा तण्डुलान्विभजेत्। ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्। ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधश्चरुम्। येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुम्' इति श्रुतम्[1]। तत्रामावास्याकर्मणश्चन्द्राभ्युदयावच्छिन्नदिनप्रारम्भे निमित्ते त्रेधा तण्डुलानिति वाक्येनापनीतपूर्वदेवतासंबन्धकानां प्रकृतहविषामेव देवतान्तरसंबन्धबोधनार्थानि त्रीण्युत्तरवाक्यानि न तु कर्मान्तरविधायकानि।

1 (अ० १ पा० ४ अ० १)।

अपरित्यक्तपूर्वकर्मसंबन्धकप्रकृतहविषामेव देवतान्तरसंबन्धात् । अत एव पूर्वहविर्देवतान्तरसंबन्धस्य निरूपकीभूतयागापेक्षायाम् 'ऐन्द्रवायवं गृह्णाति' इत्यत्रेव पूर्वप्रकृतयागा एव निरूपकाः । अत आग्नेयस्य मध्यमादिभेदेन वारत्रयमावृत्तिः । दधियागपयोयागयोः स्वविशिष्टाणिष्टसाध्ययागाभ्यां साम्यासाम्यां सह तन्त्रेणानुष्ठानमिति सिद्धान्तितं षष्ठे । तत्र च मध्यमाद्युद्देशेन दातृत्वादिगुणविशिष्टदेवताविधिः । समानाधिकरणपदस्थले परम्परान्वयस्य क्लृप्तत्वात् । अतो न विधेयानेकत्वनिमित्तको वाक्यभेदः । उत्तरवाक्ययोः द्रव्यद्वयोद्देश्यत्वप्रयुक्तवाक्यभेदस्तु स्वीक्रियते । अभ्युदितेष्टिप्रकरणस्थ 'सह श्रपयति' इति वाक्येन सप्रतिपन्नदेवताकहविषः सहश्रपणविधानाच्चरुत्वाधिकरणत्वे आर्थिके अनूद्येते । अतो द्रव्यदेवताविशिष्टभावनान्तरविधिपक्षे गौरवापत्तेर्द्रव्योद्देशेन देवतान्तरविधिपक्ष एव श्रेयानिति प्राञ्चः ।

नव्यास्तु—समानाधिकरणपदस्थले परम्परान्वयस्वीकारे 'पञ्चदशान्याज्यानि' इत्यत्रापि स्तोत्रोद्देशेन पञ्चदशत्वसंख्याविशिष्टाज्यविधानापत्तेः, उत्तरवाक्ययोः स्वविष्टादिप्रकृतिकस्य पुरोडाशेन समं सहश्रपणापत्त्या चरुत्वविधेरप्यावश्यकत्वात् , द्रव्योद्देशेन देवतान्तरविधिपक्षे विधेयानेकत्वनिमित्तकवाक्यभेदापत्तेः, द्रव्यदेवतातद्गुणचरुत्वादिविशिष्टभावनान्तरविधिपक्ष एव श्रेयानित्याहुः । तत्र च श्रपणविधिं विनैव श्रपणस्य प्राप्तत्वात्, 'सह श्रपयति' इत्यनेन सप्रतिपन्नदेवताकहवि श्रपणोद्देशेन साहित्यं विधीयते । तच्चैककालावच्छेदेनैकपात्राधिकरणकत्वम् । निरुक्तैकपात्राधिकरणतासंबन्धेनाऽऽधारतानिरूपकाधेयतासंबन्धेन भावनान्वयीति कर्तृत्वाद्यन्यतमस्य शाब्दबोधविषयत्वान्नोक्तातिप्रसङ्गः । यद्वैकपात्रवृत्त्येककालावच्छिन्नाधिकरणत्वसंबन्धेन भावनान्वयीति नोक्तदोषः । न च श्रपणानुकूलकृतिरूपभावनाया आत्मवृत्तित्वान्निरुक्तसंबन्धैर्निरुक्तसाहित्यविशिष्टत्वासंभवः । 'यजेत स्वर्गकामः' इत्यत्र स्वर्गनिरूपितकरणतासंबन्धेन भावनाया यागविशिष्टत्ववच्छ्रपणानुयोगिकनिरुक्तततत्संबन्धेन निरुक्तसाहित्यविशिष्टत्वस्यापि प्रकृतभावनाया संभवात् । यदि तु तत्र करणतानिरूपकोद्देश्यकत्वमेव संबन्धः । तर्हि प्रकृतेऽपि निरुक्ततत्तत्संबन्धानुयोगिश्रपणोद्देश्यकत्वमेव संबन्ध इति न काप्यनुपपत्तिः ।

अथ श्रपणोद्देशेन साहित्यविधौ दध्न, पयसः श्रपणाभावात्तत्र कथं साहित्यप्रतीतिः । अत एवायं साहित्यविशिष्टश्रपणविधिः । तत्राऽऽग्नेयद्रव्ये श्रपणप्राप्तावपि दधिपयसोस्तत्प्राप्तिरेव विशेषणांशे विधेः फलमिति प्राचीनैरुक्तम् । भवन्मते तु श्रपणांशे विध्यनङ्गीकाराद्दधिपयसोः श्रपणं न स्यात्, नितरां च तदुद्देशेन विधीयमानं साहित्यमिति चेत् । सत्यम् । दधिपयसोर्न प्रमाणान्तरेण श्रपणप्राप्तिः । तथाऽपि श्रपणे-

---

१ ( अ० ६ पा० ५ अ० १ ) इत्यत्रेति शेषः । २ संप्रतिपन्नदेवताकेति—एकदेवताकेत्यर्थः ।

द्देशेन साहित्यविधौ केनचित्साहित्यावश्यकत्वेऽनुपस्थितयात्किंचिद्द्रव्यस्य साहित्यनिरूपकत्वकल्पने गौरवाल्लाघवेन प्रदानसाहित्यनिरूपकत्वेन क्लृप्तयोर्दधिपयसोरेव तन्निरूपकत्वं कल्प्यते । तथा च प्रहरणे शाखासाहित्यवशेन शाखाप्रहरणवदाग्नेयद्रव्यश्रपणे दधिपयःसाहित्यवशेन दधिपयसोरपि श्रपणविधिः । एवं च तृतीयविधिप्रकाराश्रयणेन प्राप्त्युपपत्तौ प्राचां पञ्चमविधिप्रकाराश्रयणमपि, अप्रामाण्यं प्रकटयति । न च संप्रतिपन्नदेवताकहवि श्रपणस्यैवोद्देश्यतायां प्रमाणाभावात्, श्रपणमात्रस्योद्देश्यत्वे मध्यममाध्ययागाभ्यासीयश्रपणेऽपि केनचित्साहित्यापत्तिरिति वाच्यम् । लाघवानुरोधेन प्रदानसाहित्यनिरूपकनिरूपितसाहित्यस्यैवात्र विधेयत्वेन पुनराधेयन्यायेन विधेयसामर्थ्यानुरोधेनोद्देश्यसंकोचात्संप्रतिपन्नदेवताकहवि.श्रपणस्यैवोद्देश्यत्वे मध्यममाध्ययागीयश्रपणे साहित्याप्रसक्तेरिति ध्येयम् ।

केचित्तु—समभिव्याहारो वाक्यमिति प्राचीनप्रवादस्य साध्यत्वादिवाचकाद्वितीयाद्यभावे सति वस्तुतः शेषशेषिणोः सहोच्चारणं वाक्यमित्यर्थः । स्वप्रकृत्यर्थनिष्ठशेषित्वबोधिकानां विभक्तीनां शेषिपदोत्तरत्वेन, स्वप्रकृत्यर्थगतशेषत्वबोधिकानां च शेषपदोत्तरत्वेनाभावे सति, इति सत्यन्तार्थः । तेन प्रयाजशेषाभिघारणसक्त्वादिविनियोजकवाक्यसंग्रहः । शेषशेषिणोर्वाचकपदयोरेकान्वयबोधोपयोगिसंनिधिविशेषेणोच्चारणमिति शेषशेषिणोः सहोच्चारणमित्यस्यार्थः । तेन न प्रकरणविषयातिप्रसङ्ग इत्याहुः । तत्तु स्वत्वाननुगमादुपेक्षणीयम् । निरुक्तलक्षणं ब्राह्मणवाक्यस्यैव । मन्त्रवाक्यं तु, एकान्वयबोधोपयोगि मन्त्रपदसमभिव्याहारः । अत एव ' देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां निर्वपामि ' इति मन्त्रे कर्तृत्वाद्यन्यतमशक्तिज्ञानाजन्यस्य कर्तृत्वाद्यन्यतमसंसर्गकस्य कर्तृत्वाद्यन्यतमलक्षणाज्ञानजन्यस्य वा कर्तृत्वाद्यन्यतमशाब्दबोधस्याजननेऽपि, उक्तपदसमभिव्याहाररूपवाक्यान्तरात्, देवस्य त्वादिपदानां स्वार्थविशिष्टनिर्वापप्रकाशनद्वारा निर्वापाङ्गत्वम् । विधिवाक्यमन्त्रवाक्ययोरयमपरो विशेषः । यद्विधिवाक्ये कर्तृत्वाद्यन्यतमलक्षणया संसर्गविधया तद्भानाङ्गीकारेण वा स्वत एव विनियोजकत्वम् । मन्त्रवाक्ये तु देवस्य त्वादिपदैर्निर्वापं प्रकाशयेदित्यादिवाक्यान्तरकल्पनया । देवस्य

१ अत्र चैव विधिप्रकारा अनुसंधेयाः । शुद्धधात्वर्थकरणकभावनाविधिः, आद्यो विधिप्रकारः । यथा 'अग्निहोत्रं जुहोति' इति । अन्योद्देशेन तद्विधिरपरः । यथा 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति । धात्वर्थोद्देशेनान्यकरणकभावनाविधिस्तृतीयः । यथा ' दध्ना जुहोति ' इति । अन्योद्देशेनान्यकरणकभावनाविधिश्चतुर्थः । यथा ' दध्नेन्द्रियकामस्य जुहुयात् ' इति । गुणविशिष्टधात्वर्थकरणकभावनाविधिः पञ्चमः । यथा ' सोमेन यजेत ' इति । अन्योद्देशेन गुणविशिष्टधात्वर्थकरणकभावनाविधिः षष्ठः । यथा ' सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः ' इति । अत्र च पूर्वपूर्वविधिप्रकारापेक्षयोत्तरोत्तराणां दौर्बल्यमनुसंधेयम् । २ ( अ० ६ पा० ४ अ० ८ ) अत्रत्येनेति शेषः ।

स्त्वादिपदानां मन्त्रघटकपदार्थत्वाभावेन विध्यभावेन च मन्त्रवाक्यस्य स्वतोऽविनियोजकत्वात्। विध्यभावादेव च देवस्य स्त्वादिपदार्थानां निर्वापाङ्गत्वमपि न स्वतो मन्त्रवाक्यगम्यम्। अपि तु श्रुतिघटकवाक्यान्तरकल्पनयेति बोध्यम्। अत्र विधिवाक्यस्य योग्यताज्ञानं विना लक्षणया संसर्गविषया वा कर्तृत्वाद्यन्यतमबोधकत्वाभावेन योग्यतारूपलिङ्गानुमापकत्वेनाङ्गत्वप्रमाणत्वेऽपि न लिङ्गतो दौर्बल्यम्। प्रत्युत सश्रुतिकवाक्यान्तरकल्पनया प्रमाणभूताल्लिङ्गात्स्वतो विनियोजकत्वेन प्रबलत्वमेव। अत एवाग्नीषोमीयप्रकरणपठितस्य 'त्वं ह्यग्ने प्रथमो मनोता' इति मनोतामन्त्रस्य केवलाग्निप्रकाशकस्योभयदेवत्याग्नीषोमीये विनियोगासंभवाज्ज्योतिष्टोममहाप्रकरणरूपसामान्यसंबन्धबोधकप्रमाणसहकृतलिङ्गेन केवलाग्निदेवताके सवनीय उत्कर्षप्राप्तौ 'यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्या' इति ब्राह्मणवाक्येन लिङ्गबाधेनाग्नीषोमीयाङ्गत्वमित्युक्तं दशमे।

मन्त्रवाक्यस्य तु सामर्थ्यकल्पनाद्वारा सश्रुतिकवाक्यान्तरकल्पकस्य द्व्यन्तरितप्रामाण्यकतया श्रुतिकल्पनारूपैकान्तरितप्रामाण्यकाल्लिङ्गाद्दुर्बलत्वम्। अत एव 'स्योनं ते सदनं करोमि। घृतस्य धारया सुशेवं कल्पयामि। तस्मिन्त्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इत्येकान्वयबोधोपयोगिपदसंनिधिरूपाद्वाक्यात्संपूर्णस्य सदनाङ्गत्वप्रसक्तौ तद्बाधेन लिङ्गात्पूर्वार्धस्य सदने, उत्तरार्धस्य सादनेऽपि विनियोगः। तच्छब्दस्तु 'तप्ते पयसि दध्यानयति। सा वैश्वदेव्यामिक्षा' इत्यत्रेव वाक्यान्तरीयार्थपरामर्शकत्वेन युज्यत इत्युक्तं बलाबलाधिकरणे।

( इति—वाक्यनिरूपणम्। )

====

## ॥ अथ प्रकरणं निरूप्यते ॥

---

अथ किं प्रकरणम्। न तावत्संनिधिपठितत्वम्। सर्वस्यैव यत्किंचित्संनिधिपठितत्वेन सर्वाङ्गत्वापत्तेः। न च तत्संनिधिपठितत्वं तद्विनियोजकप्रकरणमिति विशिष्य निर्वचनान्नोक्तदोषः। अङ्गानां प्रधानसंनिधिपठितत्वेन प्रधानाङ्गित्वापत्तेः। दर्शपूर्णमासयोर्गोदोहनसंनिधिपठितत्वेन तदङ्गत्वापत्तेश्च। अथाश्रुतभाव्यकतत्संनिधिपठितत्वं तद्विनियोजकप्रकरणं, प्रधानानां श्रुतभाव्यकत्वान्नोक्तदोष इति चेत्। न। समिद्यागस्याश्रुतभाव्यकतनूनपाद्यागसंनिधिपठितत्वेन तनूनपाद्यागाङ्गित्वापत्तेः। अथ श्रुतभाव्यकत्वे सति अश्रुतभाव्यकतत्संनिधिपठितत्वं तद्विनियोजकप्रकरणम्। समिद्यागस्याश्रुतभाव्यकतनूनपाद्यागसंनिधिपठितत्वेऽपि श्रुतफलकत्वाभावान्नोक्तदोषः। गोदोहनस्य

1 ( अ० १० पा० ४ अ० २२ ) इत्यत्रेति शेषः। २ ( अ० ३ पा० ३ अ० ७ )।

दर्शपूर्णमासाङ्गत्ववारणायाश्रुतभाव्यकेति चेत् । विश्वजितो विकृतित्वेन प्रकरणित्वाश्रयात्तत्राव्याप्त्यभावेऽपि पिण्डपितृयज्ञस्य श्रुतफलकत्वाभावेन स्वाङ्गप्रकरणित्वा-मापत्तेः । प्रयाजादीनां श्रुतभाव्यकप्रोक्षणाङ्गत्वापत्तेश्च । अतोऽशक्यनिर्वचनं प्रकरणमिति चेत् । न । संनिधिपठितत्वे सति, इतिकर्तव्यताकाङ्क्षाया एव प्रकरणपदार्थत्वात् । तत्संनिधिपठितत्वविशिष्टकथंभावाकाङ्क्षा तद्विनियोजकप्रकरणमिति तु निष्कर्षः ।

अस्ति चेदं प्रयाजादिविनियोजकदर्शपूर्णमासादिकरणकभावनाकथंभावाकाङ्क्षात्मकप्र-करणे । दर्शपूर्णमासादीनां प्रयाजादिसंनिधिपठितत्वात् । दर्शपूर्णमासादिषु दीक्षणीयादि-प्रकरणित्ववारणाय, विकृतेः प्राकृताङ्गप्रकरणित्ववारणाय च विशिष्टान्तम् । प्रया-जादीनां पुरोडाशादिरूपद्रव्याङ्गत्ववारणाय कथंभावाकाङ्क्षेति । तदुक्तम्, 'असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात्'[1] इति । प्रमाणान्तरासंयुक्तमितिकर्तव्यतार्थित्वरूपात्प्रक-रणादङ्गमिति सूत्रार्थः । अत्र श्रुत्यादिप्रमाणान्तरविनियुक्तस्य प्रोक्षणादेः प्रयोजनाका-ङ्क्षारूपसहकारिकारणविरहान्न प्रधानीयकथंभावाकाङ्क्षारूपप्रकरणादङ्गत्वम् । प्रयाजादे-रेव प्रयोजनाकाङ्क्षारूपसहकारिकारणवशादङ्गत्वमिति प्रकरणविनियोज्यविषयविशे-षसूचनाय प्रमाणान्तरासंयुक्तत्वोक्तिः, न तु तस्य लक्षणे निवेशः, प्रयोजनाभावात् । प्रधानीयप्रयोजनाकाङ्क्षारूपसहकार्यभावादेवाङ्गानां प्रधानसंनिधिपठितत्वविशिष्टकथंभावा-काङ्क्षावत्त्वेऽपि न प्रधानानामङ्गाङ्गत्वम् । न च समिद्यागादेः प्रयोजनाकाङ्क्षारूपसहकारि-सत्त्वात्तनूनपाद्यागाङ्गत्वापत्तिरिति वाच्यम् । तनूनपादादेरितिकर्तव्यताकाङ्क्षाकाले समि-दादेः प्रयोजनाकाङ्क्षाभावात् । तनूनपादादेः फलवत्त्वावगमोत्तरं हि, इतिकर्तव्यताकाङ्क्षा तदवगमश्च, प्रधानभावनाया इतिकर्तव्यताकाङ्क्षया प्रधानभावनान्वये सति भवेत्, प्रधा-नभावनेतिकर्तव्यताकाङ्क्षायां च स्वप्रयोजनाकाङ्क्षारूपसहकारिवशात्तनूनपात इव समि-धोऽप्यन्वयान्नैराकाङ्क्ष्यमिति न तनूनपाद्यागाङ्गत्वापत्तिः । अत एव ज्योतिष्टोमाश्रि-तानां 'पशुकाम उक्थ्यं गृह्णीयात्'[2] इत्यादिकाम्यसंस्थानां दीक्षणीयादिसंनिहितत्व-विशिष्टकथंभावाकाङ्क्षावत्त्वेऽपि न प्रकरणाद्दीक्षणीयादीनां संस्थाङ्गत्वम् । अन्यप्रयुक्ता-श्रयसापेक्षगुणफलसंबन्धविधेः पूर्वं दीक्षणीयाद्यङ्गानामाश्रयीभूतज्योतिष्टोमभावनान्व-यावश्यकत्वेन प्रयोजनाकाङ्क्षाभावात् । अतो गुणभावनाया इतिकर्तव्यताकाङ्क्षायामा-श्रयतोऽतिदेशादेव धर्मप्राप्तिरिति नाऽऽश्रयसामानविध्यमित्युक्तं तृतीये, प्रयोजना-काङ्क्षाविरहादेव च न फलार्थगुणस्याऽऽश्रयाङ्गत्वम् । पिण्डपितृयज्ञस्य तु श्रुत्याद्यवि-नियुक्ताङ्गसत्त्वेऽपि न विनिगमनाविरहात्तदङ्गत्वप्रसक्तिः । कालश्रवणस्यैव प्राधान्ये

---

१ ( अ० ३ पा० ३ अ० ४ सू० ११ ) । २ ( अ० ३ पा० ६ अ० १६ ) इत्यत्रेति शेषः ।

विनिगमकत्वात् । कालादिश्रवणाद्यविशेषे तु पिण्डपितृयज्ञवच्छ्रुत्याद्यविनियुक्तस्यापि फलार्थत्वापत्तेर्न परस्पराङ्गत्वापत्तिः । विकृतिसंनिधिपठितोपहोमानां तु स्वसंनिधिपठितत्व-विशिष्टविकृतिभावनाकथंभावाकाङ्क्षारूपप्रकरणसत्त्वेऽपि न ततोऽङ्गत्वम् । उपहो-मेभ्यः बलिष्ठोपकारकत्वेन पूर्वान्वितैः प्राकृताङ्गैः कथंभावाकाङ्क्षायाः शान्तत्वेनोपहोम-विनियोगबोधाव्यवहितपूर्वं निरुक्तप्रकरणाभावात् । अपि तु संनिधिरूपस्थानवशाद्विकृत्या-काङ्क्षामुत्थाप्य तत एवाङ्गत्वम् । न चैवमुत्थाप्याकाङ्क्षाया प्रकरणलक्षणातिव्याप्तिः । तस्या अपि स्थानवत्प्रकरणत्वेन लक्ष्यत्वात् । उपहोमेषु प्राकरणिकाङ्गत्वव्यवहारा-पत्तिस्तु लिङ्गविनियोज्यमन्त्रेषु श्रौताङ्गत्वापत्तिवत्बलिष्ठनिरुक्तकथंभावाकाङ्क्षाया एव तद्व्यवहारनियामकत्वेन निराकार्येति बोध्यम् ।

नव्यास्तु—अवगतफलसंबन्धसंनिहितवाक्यप्रमितपदार्थवृत्ति यत्पूर्वप्रमाणानवगताङ्गताक विषये, इतिकर्तव्यतात्वप्रकारकापेक्षणं तत्प्रकरणम् । अस्ति च दर्शपूर्णमासादौ प्रयाजादि-विषये तत् । समिद्यागस्य प्रकरणात्तनूनपाद्यागाङ्गत्ववारणायावगतफलसंबन्धेति पदार्थविशे-षणम् । प्रयाजादीनां प्रकरणादसंनिहितज्योतिष्टोमाद्यङ्गत्ववारणाय संनिहितवाक्यप्रमि-तेति तद्विशेषणम् । अङ्गस्य पूर्वप्रमाणानवगताङ्गताकेति विशेषणाच्च न प्रोक्षणादीनां श्रुतिलिङ्गाभ्यामवगतव्रीह्याद्यङ्गभावानां प्रकरणाद्दर्शाद्यङ्गत्वापत्तिः । 'वामदेव्यं गायति' इत्यादौ प्रमाणान्तरेणानवगताङ्गताकसामविषयेऽवगतफलसंबन्धस्य स्तोत्रस्य स्वसाधनी-भूतऋगक्षराभिव्यक्त्यर्थमपेक्षासत्त्वात्प्रकरणेनाङ्गत्वप्रसक्तौ तद्व्यावृत्त्यर्थमितिकर्तव्यता-त्वेनेति विशेषणम् । तस्य ऋगक्षराभिव्यक्त्यर्थं सामापेक्षायामपि सिद्धसामापेक्षाया-मितिकर्तव्यतात्वप्रकारकत्वाभावादित्याहुः । अत्र समिद्यागादौ तनूनपाद्यागाङ्गत्वस्य प्रोक्षणादीनां प्रकरणाद्दर्शपूर्णमासाङ्गत्वस्य चोक्तरीत्या वारणसंभवादवगतफलसंबन्धेति पूर्वप्रमाणानवगताङ्गताकेति च विशेषणं सूत्रस्थासंयुक्तत्वरूपविशेषणवद्विनियोगप्रयोजक-प्रकरणशरीरे प्रकरणविनियोज्यविषयविशेषबोधनार्थमेव ।

अस्तु वा तनूनपादादौ समिद्यागप्रकरणित्वव्यवहाराभावाद्व्यवहारप्रयोजकप्रकरण-शरीरेऽवगतसंबन्धेति विशेषणम् । दर्शपूर्णमासादौ प्रोक्षणादिप्रकरणित्वव्यवहारस्य तु सर्वानुभवसिद्धत्वात्तद्वारकविशेषणोपादानं तु, अनुचितमेव ।

अस्तु वा गोदोहनादौ प्रयाजादिप्रकरणित्वव्यवहाराभावात्पूर्वप्रमाणानवगताङ्गता-केति स्वपूर्वप्रवृत्तप्रमाणानवगताङ्गताकेत्यर्थकम् । न तु प्रकरणपूर्वोद्दिष्टश्रुतिलिङ्गवा-क्यानवगताङ्गताकेत्यर्थकम् । दर्शपूर्णमासादौ प्रोक्षणादिप्रकरणित्वव्यवहारानापत्तेः । गोदोहनभावनाकथंभावाकाङ्क्षातः पूर्वप्रवृत्तदर्शपूर्णमासभावनाकथंभावाकाङ्क्षारूपप्रकर-णेन प्रयाजादीनामङ्गतावगमात्तु न गोदोहनादिषु तत्प्रकरणित्वव्यवहारः । अत इदं

व्यवहारप्रयोजकप्रकरणलक्षणम् । विनियोजकप्रकरणलक्षणं तु, अस्मदुक्तमेव । तनूनपादादिषु समिदादिविनियोजकप्रकरणसत्त्वेऽपि समिदादीनामुक्तरीत्या तदङ्गत्वस्य वारयितुं शक्यत्वादिति तत्त्वम् ।

केचित्तु—उभयाकाङ्क्षा प्रकरणम् । सा च फलाकाङ्क्षाविशिष्टकथंभावाकाङ्क्षा । वैशिष्ट्यं च स्वाश्रयभावनासंनिहितभावनाश्रितत्वसंबन्धेन । न त्वेकपुरुषावगतत्वादिना । तेन न विश्वजिदादेः प्रकरणेन दर्शाङ्गत्वम् । उक्तसंबन्धेन यदीयफलाकाङ्क्षाविशिष्टा, निर्णीततदनङ्गत्वकगता या कथंभावाकाङ्क्षा सा तद्विनियोजकप्रकरणमिति निष्कर्षः । उक्तं हि 'असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात्' इति । अत्र पञ्चम्याः सामानाधिकरण्यात्कथंभावाकाङ्क्षैव प्रकरणमित्यवसीयते । असंयुक्तपदं च फलाकाङ्क्षोपस्थापकम् । न तु संनिपातिनिवारणमित्याहुः । तदतीव मन्दम् । तथा हि, विनियोगफलोपधायकप्रकरणस्य वेद लक्षणं तत्स्वरूपयोग्यस्य वा । नाऽऽद्यः । स्वाश्रयभावनासंनिहितभावनाश्रितत्वसंबन्धेन प्रयाजादिभावनीयफलाकाङ्क्षाविशिष्टाया श्रुतभाव्यकत्वेन निर्णीतप्रयाजाद्यनङ्गत्वकप्रोक्षणादिभावनागतकथंभावाकाङ्क्षाया प्रयाजविनियोगरूपफलानुपधायकाया मतिव्याप्तेः । प्रधानकथंभावाकाङ्क्षारूपप्रकरणेन फलवत्त्वेऽवगते तनूनपाद्यागीयकथंभावाकाङ्क्षोदयान्निर्णीतानङ्गत्वकतनूनपाद्यागगताया तस्या मुक्तसंबन्धेन समिद्यागीयफलाकाङ्क्षाविशिष्टत्वेनातिव्याप्तेश्च । न च प्रधानकथंभावेन तनूनपाद्यागीयफलवत्त्वावगमसमकालमेव समिद्यागस्यापि फलवत्त्वावगमेन फलाकाङ्क्षोपरमात्तदुत्तरकालीनतनूनपाद्यागीयकथंभावाकाङ्क्षाया न तद्वैशिष्ट्यमिति वाच्यम् । आलोकपरामर्शजन्यानुमितौ सामानाधिकरण्यसंबन्धेनातीतधूमपरामर्शवैशिष्ट्यस्येवोक्तसंबन्धेनातीतसमिद्यागीयफलाकाङ्क्षावैशिष्ट्यस्य तनूनपाद्यागीयकथंभावाकाङ्क्षायां सत्त्वे बाधकाभावात् ।

यदि तु धूमपरामर्शजन्यतावच्छेदककोटावुक्तदोषवारणाय स्वाव्यवहितोत्तरत्वसंबन्धस्यापि निवेशवदत्र समानकालीनत्वसंबन्धस्यापि निवेश इत्युच्यते ततो निर्णीततदनङ्गत्वेति व्यर्थम् । अङ्गकथंभावाकाङ्क्षाय मुक्तसंबन्धेनातीतप्रधानफलाकाङ्क्षावैशिष्ट्यविरहेणातिव्याप्त्यभावात् । तस्य तद्वारकत्वेन त्वदभिप्रेतत्वात् । न द्वितीयः । अङ्गकथंभावाकाङ्क्षायाः प्रधानविनियोगस्वरूपयोग्यप्रकरणत्वेऽपि प्रधानफलाकाङ्क्षारूपसहकारिविरहात्, तनूनपाद्यागकथंभावाकाङ्क्षायाः समिद्यागविनियोजकप्रकरणत्वेऽपि समिद्यागफलाकाङ्क्षारूपसहकारिविरहादेवाङ्गत्वप्रसङ्गवारणोपपत्तौ फलाकाङ्क्षावैशिष्ट्यनिवेशस्य निर्णीततदनङ्गत्वानिवेशस्य च व्यर्थत्वात् । तदुभयानिवेशेऽपि प्रयाजादीनां

---

१ ( अ० ३ पा० ३ अ० ४ सू० ११ ) । २ संनिपातीति—संनिपत्योपकारकाङ्गमित्यर्थः ।

प्रोक्षणाद्यङ्गत्ववारणाय फलाकाङ्क्षायाः सहकारित्वकल्पनाया आवश्यकत्वादिति दिक् ।

एतस्य च प्रकरणस्याऽऽकाङ्क्षारूपत्वेन स्वतोऽप्रमाणत्वाद्वाक्यकल्पनाद्वारैव प्रामाण्यम् । तथा हि । प्रधानगतेतिकर्तव्यताकाङ्क्षया प्रयाजादिगतप्रयोजनाकाङ्क्षासहकृतया प्रयाजवाक्यस्य प्रधानवाक्यस्य च स्वस्वावान्तरवाक्यार्थसमाप्तस्यापि महावाक्यैकदेशत्वरूपपदत्वाक्रान्तस्य संनिधिरूपं वाक्यं कल्प्यते । उक्तपारिभाषिकपदानामपि स्वार्थोपस्थितिद्वारा तन्निष्ठाश्रुतपदान्तरकल्पनानुकूलयोग्यतारूपलिङ्गानुमानद्वारेतिकर्तव्यतात्ववाचीत्थमित्यादिगौणश्रुतिकल्पकत्वमिति परम्परया प्रकरणस्याङ्गत्वे प्रामाण्यम् । वाक्यैकवाक्यताकल्पनप्रकारश्च 'समिधो यजति, इत्थं दर्शपूर्णमासाभ्यां यजेत' इति । अत एव दर्शपूर्णमासप्रकरणाम्नातेन 'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपेत्' इत्यनेन विहितवैमृधस्य प्रकरणाद्दर्शपूर्णमासोभयाङ्गत्वप्रसक्तौ वाक्यात्पौर्णमास्यङ्गत्वमित्युक्तं बलाबलाधिकरणे ।

( इति—प्रकरणनिरूपणम् । )

## ॥ अथ स्थानं निरूप्यते ॥

सादेश्यं स्थानम् । तच्च द्विविधम् । अनुष्ठानसादेश्यं पाठसादेश्यं चेति । पाठसादेश्यं द्विविधम् । यथाक्रमपाठः संनिधिपाठश्चेति । पशुधर्माणामग्नीषोमीयपश्वङ्गत्वमनुष्ठानसादेश्यात् । तथा हि 'यो दीक्षितो यदग्नीषोमीयं पशुमालभेत' इति क्रयसंनिधावाम्नातस्याग्नीषोमीयपशोः 'स एष द्विदेवत्यः पशुरौपवसथ्येऽहन्यालब्धव्यः' इति वचनादौपवसथ्येऽहन्यनुष्ठानम् । तद्दिन एव च पशुधर्माः श्रूयन्ते । अतस्तेऽनुष्ठानसादेश्यात्पश्वङ्गम् । ज्योतिष्टोममहाप्रकरणसत्त्वेऽपि पशुधर्माणां सोमद्रव्यकज्योतिष्टोमाङ्गत्वायोग्यत्वात्तदनङ्गत्वम् । अत एवाऽऽनर्थक्यतदङ्गन्यायेन ज्योतिष्टोमाङ्गसर्वपश्वङ्गत्वप्रसक्तावपि स्थानेनोपसंहारन्यायेनाग्नीषोमीयमात्राङ्गत्वम् । पश्वन्तरे त्वतिदेशादेव तेषां प्राप्तिरिति सिद्धान्तः । 'इन्द्राग्नी रोचना दिवः' इत्यादीनां क्रमाम्नातानां याज्यानुवाक्यानाम् 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्' 'वैश्वानरं द्वादशकपालं निर्वपेत्' इति क्रमाम्नातेष्वङ्गत्वं यथाक्रमपाठात् । नक्षत्रेष्टिसंनिधिपठितोपहोमानां नक्षत्रेष्ट्यङ्गत्वं संनिधिपाठात् । नक्षत्रेष्टेः प्राकृताङ्गनिराकाङ्क्षत्वेन प्रकरणादङ्गत्वायोगादिति प्राचीन-

---

१ ( अ० ३ पा० ३ अ० ७ ) । २ ( अ० ३ पा० १ अ० ९ ) अत्रत्यैनोनि शेष-

